

# काठकोपनिषत्



श्रीमच्छङ्कराचार्यकृत भाष्येण

तथा

श्रीरंगरामानुजकृत प्रकाशिकया

च समेता

पंडित श्रीधरशास्त्री पाठक

संस्कृताध्यापक डेक्कन कॉलेज

इत्येतैः

स्वनिर्मितया बालबोधिन्या समलंकृता

पुण्यपत्तनम्

ओरिएंटल बुकसप्लाइंग एजन्सी

१९१९

# PUBLISHER'S NOTE.

The Bombay University has prescribed for the B. A. Honours Course for the year 1920 Kena and Katha Upanishads with the Bhâshyas of Sankarâchârya and Ranga-Râmânuja. These two Commentaries have been already published separately in the Anandâshram Series and elsewhere but they together cost a good deal and were besides inconvenient for a comparative study as the student had to handle two separate Volumes for the purpose. To obviate this difficulty we have now published both the Bhâshyas together and have besides added a new and lucid commentary by Mr. Shridhar Shâstri Pâthak of the Deccan College. This last commentary will be found very useful for students whose difficulties have been all anticipated and explained in easy language, so that the Commentary fully justifies its name Bâlabodhinî. It must be stated however that the simplicity of the Bâlabodhinî has been attained after great effort and no pains have been spared to give in it appropriate extracts from Adhikarana-ratnamâlâ, Sâbara-bhâshya and other texts in order to throw light upon the many knotty points of Mîmâmsâ which abound in the Ranga-Râmânuja Bhâshya in particular.

In the Introduction the learned Shastri has given the leading views of Oriental scholars like Weber, eussen, Regnaut and Max Muller on the Upanishads in question, has refuted them where necessary, and has besides offered his own views based upon independent critical research. The Appendices form another useful feature of the volume. We hope therefore that our students and the world of Sanskrit scholars generally will show their appreciation of the learning and industry of Mr. Shridhar Shastri by purchasing this volume which is designed for them.

MANAGER.

*Oriental Book-Supplying Agency,*

15 SHUKRAWAR, POONA CITY.

# अनुक्रमणिका।

# अथ प्रास्ताविकं किंचित्।

## १ कठोपनिषत्तात्पर्यम्।

ॐ भूधरभूजानिर्विजयते। वेदवेदान्तसम्बन्धादि सर्वं वाङ्मयविषयकं केनोपनिषत्प्रस्तावनायामुदलेखि। उपनिषच्छब्दार्थोऽपि तत्रैव विस्तरशो वर्णितः। अद्वैतविशिष्टाद्वैतयोः स्वरूपं तत्तारतम्यमपि तत्रैव विदुषां दृष्टिपथमायास्यति। अत्र तु केवलं कठोपनिषत्तद्भाष्यादिविषयकं विचार्यते। इयमुपनिषत्सर्वासामुपनिषदां प्रशस्यतमा। मुमुक्षुजनोपकारकत्वात्। यतोऽस्यां पुनरुक्तिमगणयित्वा भूयो भूयःसर्वेऽपि विषयाः श्रेयःप्रेयःसम्बन्धिनः सविस्तरं वर्णिताः। यानालोच्य समभ्यस्य च मुमुक्षवः कृतकार्या भवेयुः। इयमुपनिषत् कृष्णयजुर्वेदान्तर्गतकठशाखास्था। अस्या अध्यायद्वयं प्रत्यध्यायं वल्लीत्रयम्। तत्र प्रथमवल्ल्यां शान्तिनन्तरं नचिकेतस आख्यायिका। सा चेत्थम्—यज्ञफलं कामयमानो वाजश्रवस उद्दालको विश्वजिद्यागेनेजे। तेनोत्तमा गाः पुत्रधनत्वेन संरक्ष्य स्वधनभूता गा यज्ञर्त्विग्भ्योऽदीयन्त। तद् दृष्ट्वा बालस्यापि तत्सुतस्य नचिकेतस एवं बुद्धिरासीद्यद्वृद्धगवीनां प्रदानेन दाता दुःखमयांल्लोकानाप्नोति तत्ह्येतादृशं क्रतुवैगुण्यं मया निवारणीयं स्वात्मप्रदानेनापीति। एवं चिन्तयन्स पितरमुवाच हे तात कं प्रति मां दास्यसीति तथैव द्वित्रिवारमुवाच। तेन क्रुद्धः पिता तमाह त्वां मृत्यवे दास्यामीति। तदानीं बालेन चिन्तितं मम प्राप्त्या सर्ववैभवशालिनो यमस्य किं कार्यं भवेत्। अस्तु यदि पिता ददाति तर्हि तेन धैर्येण स्वप्रतिज्ञानुसारं वर्तितव्यं शोकाकुलेन न भवितव्यमिति बोधयितुं स पितरमाह यथा तव पितरोऽपरे साधवश्च प्रतिज्ञामवितथामकार्षुस्तथैव त्वयापि वर्तितव्यं यतो व्रीहियवादिवन्मर्त्योऽवश्यं विनश्यति पुनर्जायते चेति ततः पित्रा प्रेषितो बालो यमगृहमयासीत्। परं यमस्तत्र नासीत्। तत्प्रवासे त्रिदिनपर्यन्तं तत्रैवोपोषितस्तस्थौ। ततो देशान्तरादागतं यमं तन्मन्त्रिणः प्रावोचन्। अतिथिर्वैश्वानरो भूत्वा गृहं प्रविशति। महान्तः पाद्यासनादिभिस्तच्छान्तिं कुर्वन्ति यतो यथा शान्तिमलभमानोऽग्निर्गृहादि दहति तद्वदनश्नन्नतिथिः सर्वमिष्टापूर्तादिकं नाशयतीति। अयं त्वद्गृहमतिथित्वेनागतः। तदा यमो

नचिकेतसमाह—हे ब्रह्मन् । मम गृहे त्वं तिस्रो रात्रीरनशनेनावात्सीर्यतस्ततो रात्रिसंख्यानुसारं त्रीन्वरान्वृणीष्वेति । तदानीं नचिकेता आह—त्वत्प्रेरणया यदाहं गृहं प्राप्नुयां तदा मम पिता मद्विषये सौमनस्यवान्यथा भवेत्तथा विधेहीति प्रथमो वरोऽस्तु ममेति । अथ यमेन तथास्त्वित्युक्ते नचिकेता आह—कर्मिणो येनाग्निना चितेनामरत्वं लभन्ते तस्याग्नेः स्वरूपं ब्रूहीति द्वितीयो वर इति । तदा यमेन तादृशं स्वर्गसाधनभूतमग्निं शृण्वित्युक्त्वा सोऽग्निस्तच्चयनसाधनभूता इष्टकाश्च नचिकेतसे यथावन्निवेदिताः । पुनश्च स यमोऽयाचितोऽपि वरं ददौ यदयमग्निर्नाचिकेत इति तव नाम्ना प्रथितो भविष्यतीति । ततो नचिकेतास्तृतीयं वरं वव्रे । तथाहि—प्राणिनि मृते सति देहादिसंघातव्यतिरिक्त आत्मास्तीत्येके वदन्ति । स नास्तीति कथयन्त्यन्ये । तर्हि स आत्मास्ति नवेति मम संशयं छिन्धीति । तदा नचिकेतसोऽधिकारं जिज्ञासमानेन यमेन प्रोक्तं अत्र विषये देवा अपि मुह्यन्ति । अन्यत्किंचित्पृच्छ । एतद्विषय उपरोधं मा कार्षीस्ततो नचिकेता आह—यदि देवा अप्यत्र विषये मुह्यन्ति । तर्हि त्वादृशमन्यं वक्तारं कथमहमुपलभेय ततस्त्वमिममेव संशयं निवारय । ततो बहुभिर्दुर्लभैः कामैः प्रलोभितोऽपि नचिकेता अचीकथद्यद्विषयाः क्षणभङ्गुरास्तेषु को विद्वान् स्निह्येत्तस्मादतोऽतिरिक्तं वरं नाहं कामये । इममेव संशयं छिन्धीति ॥ १ ॥ १ ॥

एवं सर्वविषयविरक्तं तं योग्याधिकारिणं बुद्ध्वा श्रेयः कथयितुकामः प्रेयोऽपेक्षया श्रेय एव विशेषतो ग्राह्यमिति बोधयितुं तयोर्भेदं च कथयित्वा विषयविरक्ततया विद्याभीप्सी त्वं भवसि नचिकेत इति तं स्तुत्वा सकामकर्मणां निषिद्धकर्मणां च कर्तॄन् निन्दति स्म । ततो मोक्षार्थिनो दौर्लभ्यं, वक्तृज्ञातृदौर्लभ्यं, तर्केणात्मनोऽज्ञेयत्वं कथयति स्म । अथ च तत्त्वज्ञानस्य समूलसंसारनिवर्तकत्वं, आनन्दावाप्तिसाधनत्वं चाह । तादृशं तत्त्वज्ञानं साधनं विना न सेत्स्यतीति तत्साधनभूतं द्विविधमोंकारोपासनमाह यमः । ततस्तेन निरूपाधिकमतिसूक्ष्मं प्रवचनादिभिरसाध्यमात्मतत्त्वमुक्तम् ॥ १ ॥ २ ॥

अथ च पूर्वोक्तविद्याविद्ययोः स्वरूपसाधनफलानि । विद्याविद्ययोर्ज्ञानसौकर्यार्था रथरूपककल्पना । तत्रादौ गन्तृगन्तव्याविवेकार्थं तत्त्वंपदार्थभूतौ द्वावात्मानावाह । तत्र भोक्तुर्जीवस्य संसारं मोक्षं वा गच्छतो रथिनो रथादिवच्छरीरादीनि गतिसाधनानि दर्शयति स्म । तत्र संसारमोक्षरूपगतिद्वैविध्यं वक्तुं सारथिद्वैविध्यं ततो गमनस्य परमावधिभूतं विष्णुपदम् । तस्य

सर्वोत्कृष्टतां द्योतयितुं सापेक्षोत्कृष्टत्वपरम्परा चोक्ता । तत आत्मनो भानाभानयोः कारणमुक्तम् । ततो बुध्द्यैकाग्र्यं विना सूक्ष्मतत्त्वस्य भानासंभवात्तदैकाग्र्यप्रकारमाह । ततो योगाभ्यासेन चित्तस्यैकाग्रतां संपाद्यात्मज्ञाने प्रयतितव्यमिति श्रुतिवाक्यम् । ततोऽशब्दमित्यादि ब्रह्मणः स्वरूपम् । तज्ज्ञानान्मुक्तिः । अथ चास्योपाख्यानस्य पठनश्रवणयोः फलश्रुतिः॥ १॥ ३॥

प्रथमाध्याये संक्षेपेणोक्तस्य ब्रह्मस्वरूपस्य विस्तरशो निरूपणे द्वितीयोऽध्याय उपयुक्तः । तत्र प्रथममिन्द्रियाणां पराक्प्रवणत्वमात्मदर्शनप्रतिबन्धकमुक्तम् । तत आत्मनश्चैतन्यस्वरूपं कथितम् । जीवेशभेदनिराकरणम् । जीवैक्यप्रतिपादनम् । जीवानित्यत्वनिराकरणम् ॥ २ ॥ १ ॥

अत्र चोक्तमेव ब्रह्म पुनः प्रकारान्तरेण निर्धारयति स्म । तथाहि— त्वंपदार्थभेदेन प्रकृतं ब्रह्म प्रतिपिपादयिषुर्यमो देहादिसंघातादात्मतत्त्वं तस्यैवात्मनोऽस्तित्वकथनम् । तस्यात्मन एकत्वं स्वातन्त्र्यं नित्यत्वं च तद्दर्शिनां शाश्वतं सुखम् । ततस्तस्यात्मनः सुखमयत्वे विदुषामनुभवस्य प्रामाण्यं कथितम् । आत्मा न परप्रकाश्यः किंतु स्वयंप्रकाश इति च कथितम् ॥ २ ॥ २ ॥

ततः संसारकारणत्वेन ब्रह्मस्वरूपावधारणाय कार्यवर्गे वृक्षस्य रूपकमालम्ब्याह । ततः सर्वनियन्तृत्वरूपं ब्रह्मलिङ्गमुक्तम् । अस्मिन्नेव शरीरे ब्रह्मज्ञानं संपादनीयं यतः पितृलोकादौ तत्संपादनं न संभवतीत्युक्तम् । तत आत्मज्ञानप्रतिबन्धकं चित्तस्यानेकाग्रतारूपं दोषं प्रतिकर्तुं योगमाह । एवं योगसाहाय्येन चित्तस्यैकाग्रतामवाप्य परमार्थदर्शिनो निवृत्तकामस्य जन्ममरणाभावलक्षणं फलमुक्तम् । एवं परमार्थतत्त्वं येन ज्ञायते तेनोपासकेनोपासनया ब्रह्मलोकादिः प्राप्यते । अज्ञानिना कर्मणा संसारगतिरवाप्यत इत्युक्तिश्च । ततः सर्ववल्ल्यर्थभूतस्य ब्रह्मात्मैकत्वलक्षणस्योपसंहारः । तत आख्यायिकोपसंहारः ॥२।३॥

## २ तैत्तिरीयब्राह्मणस्था नचिकेतस आख्यायिका ।

इयमेव नचिकेतस आख्यायिका तैत्तिरीयब्राह्मणे तृतीयकाण्ड एकादशप्रपाठकेऽष्टमेऽनुवाक उपलभ्यते । ✓तत्तात्पर्यमित्थम्—अन्नदानात्प्रथितयशाः कश्चिद्गौतमगोत्रजो वाजश्रवा नाम मुनिर्बभूव । तस्य सुतो वाजश्रवस उद्दालकाख्यो मुनिरासीत् । तेन कदाचिद्विश्वजिद्याग आजह्रे । तत्र च सर्वस्वमृत्विग्भ्यो ददे । तस्योपनयनयोग्यवयस्को नचिकेता नाम

पुत्रो बभूव । ऋत्विग्भ्यो दक्षिणात्वेन धेनुषु दीयमानासु तस्य मनस्येवं श्रद्धोदपद्यत यद्यथाशास्त्रं दक्षिणा देयेति । ततः स विचारयामास यत्कर्मसाद्गुण्यार्थं पित्रा सर्वस्वं दातव्यमहं च पितुः स्वं तस्माद्दातव्योऽहमिति विचार्य पितरं प्रत्येवमुवाच । हे पितः । कस्मै मां दास्यसि । ततोऽनुत्तरयन्तं तं पुनः पुनरेवं त्रिवारमुवाच । एवं प्रश्ननिर्बन्धात्कुपितः सन्पिताब्रवीत् । अहं त्वां मृत्यवे ददामीति । तदानीं काचिददृश्यमानशरीरा दैवी वाक्तं नचिकेतसं साग्रहमेवमवदत् । हे नचिकेतः पिता त्वां यदवोचत्तस्यायमभिप्रायो यत्त्वं मृत्योर्गृहं गच्छ । एवमभिप्रायं विशदीकृत्य सा वाग्देवता तस्मै बुद्धिं वक्ष्यमाणरूपां ददौ । यद्यमो यदा कुत्रापि प्रवसेत्तदा त्वं तद्गृहं गच्छेः । तत्र च त्रिरात्रमनश्नन् निवासं कुरु । ततस्तत्प्रश्नेऽहं त्रिरात्रमत्र न्यवसामिति ब्रूयाः । अथ स त्वां यदा पृच्छेत्त्वं किं भक्षितवानसीति तदा त्वं प्रथमरात्रौ तव प्रजाः, द्वितीयरात्रौ पशून्, तृतीयरात्रौ सुकृतं भक्षितवानस्मीति प्रतिब्रूयाः । ( अनेनेदं सूचितं—अतिथिर्गृहे समागत्य भोजनरहित एकदिने निवसति चेद्गृहस्वामिनः प्रजाक्षयो भवति । द्वितीयदिने पशुक्षयः । तृतीयदिने पुण्यक्षय इति ) एवं वाग्देवताशिक्षितो नचिकेतास्तथैवोत्तरयामास यमप्रश्नान् । तादृशानि प्रश्नोत्तराण्यधिगत्य शास्त्रतात्पर्यविदयं कुमारो न मारणीय इति निश्चित्य तं सत्कारपूर्वकमाह यमः—हे भगवन्नचिकेतः । तुभ्यं नमो वरं वृणीष्वेति । अहं जीवन्नेव पितरं गच्छेयमिति नचिकेतसा वृतम् । ततो द्वितीयं वरं वृणीष्वेति यमेनोक्ते नचिकेता आह 'यथा मदीयश्रौतस्मार्तसुकृतयोः क्षयो न स्यात्तमुपायं ब्रूहीति । ततो यमस्तस्मै नाचिकेतस एतं पूर्वानुवाकेष्वभिहितं चेतव्यमुपासितव्यं चेति द्विविधं नाचिकेतनामांकितमग्निमुवाच । तेन नचिकेतसः श्रौतस्मार्तसुकृते क्षीणे न भवतः । एवं विज्ञानपूर्वकं यो नाचिकेतमग्निं चिनुते तस्यापि न श्रौतस्मार्तकर्मक्षयो भविष्यति । पुनश्च तृतीयं वरं वृणीष्वेति यमेनोक्ते मृत्युजयरूपं वरमवृणोन्नचिकेताः । एवं वृणानाय तस्मै नाचिकेतसे पुनर्मृत्युजयहेतुत्वेन तमेव द्विविधं नाचिकेताग्निमुवाच । ( चयनोपासनयोर्मध्ये चयनस्य प्राधान्यमुपासनस्योपसर्जनत्वं यस्य पुंसः संपद्यते तस्येष्टापूर्तयोरक्षयत्वमात्रं चिरं पुण्यश्लोकमनुभूय पुनर्जन्मस्वीकारः । यस्य तूपासनं प्रधानं चयनमुपसर्जनं तस्य ब्रह्मलोकप्राप्तिद्वारा मुक्तिरेव न जन्मान्तरम् । तस्मान्मृत्युं जयेत्थं वरयोर्विभागः) ततः प्रधानभूतादग्न्युपासनान्नचिकेताः पुनर्मृत्युं जितवान् । एवमन्योऽपि

विद्वानुपासकः पुनर्मृत्युं जयति । अतः परमस्मिन्ननुवाके प्रजापतिवृत्तान्तमुखेन दक्षिणाप्रशंसास्ति । ब्राह्मणोपनिषत्कथयोरिदं तारतम्यम्—दैवी वाक् ब्राह्मणे वर्णिता । उपनिषदि तद्वर्णनं नास्ति । मरणानन्तरमात्मास्ति नास्तीति संदेहस्य निराकरणं प्रार्थितमुपनिषदि । ब्राह्मणे तथा प्रार्थनं नास्ति । ब्राह्मणे त्रय एव वराः । उपनिषदि प्रसन्नेन यमेन त्रयातिरिक्तश्चतुर्थो वरोऽदायि ।

## ३ महाभारतस्था नाचिकेतस आख्यायिका ।

इयमाख्यायिका गोदानप्रशंसापरत्वेन श्रीमन्महाभारतेऽनुशासनपर्वणि षडधिकशततमेऽ (१०६) ध्यायेऽस्ति । तत्तात्पर्यमित्थम्—भीष्मवाक्यं युधिष्ठिरं प्रति । गोदानविषय औद्दालकिनाचिकेतःसंवादरूपमितिहासं त्वां ब्रवीमि । औद्दालकिर्नाचिकेतं सुतमब्रवीद्दीक्षितं मामुपचरेति । सोऽपि तदुक्त्यनुसारमुपचरितवान् । ततः समाप्तायां दीक्षायां तेन महर्षिणा पुत्र आज्ञप्तो यन्मया स्नानं कुर्वता स्वाध्यायबद्धचेतसा नदीजलसविधे दर्भपुष्पकलशादिकं विस्मृतं तदानयेति । सच नाचिकेतस्तत्र गत्वा नदीवेगापनीतं कलशादिकमदृष्ट्वा पितरमेत्य तत्र किंचिदपि जलातिरिक्तं न दृश्यत इत्युवाच । ततः कुपितो मुनिस्तं यमं पश्येत्यशपत् । तदा क्षमस्वेति प्रार्थयमानस्यैव तस्य नाचिकेतस्य देहो गतसत्त्वो भूमौ न्यपप्तत् । पतितं सुतं दृष्ट्वा पितापि किं मयानुष्ठितं पापेनेति ब्रुवन् भूमौ निपपात । ततो विलपतस्तस्यावशिष्टं दिनं शर्वरी च समाप्ता । अथ च प्रातर्दिव्यरथेन पुनः प्रत्यागतः सुतः । तं दृष्ट्वा पिता प्राह—पुत्र । दिष्ट्या त्वं प्रत्यागतः । न दृश्यते मानुषं ते वपुः । तत्र त्वया दिव्यलोकाः प्रत्यक्षीकृताः स्युः । तथाच तत्र यद्वृत्तं तत्कथय । एवं पित्रा पृष्टो नाचिकेतः शृण्वतां महर्षीणां पुर एवमुवाच । अहं यमलोकं गतवान् । तत्र यमेन बहवः शुभलोका दर्शिता यत्र गवां गोरसस्य च दातारो गच्छन्ति । तेच लोका मया प्रत्यक्षीकृताः । अतः, हे पितः । अहं गवां दानमनुष्ठास्ये । अत्रोपनिषन्महाभारताख्यायिकयोः केवलमुद्दालकादिनाम्नां यज्ञस्य च सादृश्यमस्ति नान्यत्किंचित् । तत्रापि पुत्रस्य नामोपनिषदि नाचिकेता इति । अत्र च नाचिकेत इति । तेनैतत्कथोपनिषन्मूलिका न स्यादिति प्रतीयते । केवलं कठोपनिषदाङ्ग्लप्रस्तावनायामेतस्या निर्देशः हिरियण्णामहाभागैः कृतः । तद्विमर्शो कृतवद्भिः अस्माभिरियं कथा सतारतम्यं प्रादर्शि ॥

## ४ कठोपनिषदः प्रतीयमानानि तत्त्वानि ।

एतस्या उपनिषदः पठनसमये वक्ष्यमाणतत्त्वानि प्रतीतिपदमारोहन्ति । १ अतिथिपूजा गृहस्थस्यावश्यकर्तव्यतामारोहति । २ ब्रह्मविद्यया समो नान्यो लौकिको वैदिको वा कामः (१।१।२३) । ३ विद्याविद्ये अत्यन्तभिन्ने । प्रायः सर्वेऽप्यविद्यायामेव वर्तन्ते य इहामुत्रफलभोगविरक्तः स एव विद्याधिकारी (१।२।४३) ४ यमेन कर्मणा यमलोको लब्धः (१।२।१०) ५ ब्रह्मणः श्रैष्ठ्यम् (१।२।१४) ६ आत्मा प्रवचनादिभिरलभ्यः किन्तु स्वयं तद्वरणेन लभ्यः (१।२।२३) ७ आत्मा ब्राह्मणक्षत्रियादिसर्वप्राणिभक्षकः (१।२।२५) ८ अनाद्यविद्याप्रसुप्तैः पुरुषैर्विद्याप्राप्तौ प्रयत्नो विधेयः (१।३।१४) ९ गूढात्मज्ञाने यः प्रतिबन्धस्तत्स्वरूपम् (२।१।१) १० ज्ञातुर्ज्ञेयस्य चात्मैक एवेत्यद्वैतम् (२।१।१५) ११ ब्रह्मप्राप्तौ वैराग्यमेवैकं साधनम् । (तज्ज्ञानप्राप्तिद्वारैव साधनं भवतीति शास्त्रसिद्धान्तः) (२।३।१५) । १२ मन्दब्रह्मविद्भिर्योगमार्ग आस्थेयः (२।३।१६)

## ५ कठोपनिषत्स्थमन्त्राणामन्यत्रोपलब्धिः ।

एतदुपनिषत्स्था मन्त्राः किंचिद्भेदेनार्थसादृश्येन वान्यत्रोपलभ्यन्ते । क्वचित्तु यथायथं सर्वाक्षरघटिततयोपलभ्यन्ते । एतादृशं साम्यं मुण्डकोपनिषदि श्वेताश्वतरोपनिषदि भगवद्गीतासु चोपलभ्यते । बहुषु स्थलेषूपमादि समानम् । सर्वासामुपनिषदां भगवद्गीतायाश्च ज्ञानप्रतिपादकत्वादर्थसाम्यं तेन क्वचिच्छब्दसाम्यमपरिहार्यमेव । म्याक्समुलरमहाभागेन प्रदर्शिता एतदुपनिषद्गतमन्त्राणां उपनिषदन्तरमंत्राणां च साम्यनिर्देशाः पुस्तकेषु नोपलभ्यन्तेऽतस्तदवलम्बनं सावधानतया कर्तव्यं सुधीभिः ।

## ६ पाठभेदाः ।

इयमुपनिषद्दिगम्बरानुचरेति नाम्ना प्रथितेन महाराष्ट्रीयसाधुश्रेष्ठैनैकनाथसमकालीनेन केनचिन्महाभागेनार्थप्रकाशिकाव्याख्यया व्याख्याता । सा च पुण्यपत्तनस्थानन्दाश्रममुद्रणालये मुद्रिता । तत्र सन्ति बहवो भिन्नार्थकाः पाठाः । तत्र प्रथमवल्लीस्थाः केचिन्निर्दिश्यन्ते । तथाहि—१।१।१२ मंत्रे 'न तत्र त्वं न जरया बिभेति' इत्यस्य स्थाने 'न तत्र त्वं जरया बिभेषि' इत्यतीव भिन्नार्थकः पाठः । यतः प्रथमपाठे नचिकेतस एतद्वाक्यं द्वितीयपाठे मृत्योरेतद्वाक्यम् । तथा तत्रैवोत्तरार्धे 'मोदते' इत्यस्य स्थाने 'मोदमे' इति पाठः पूर्ववदेव भिन्नार्थकः । १।१।१३ इत्यत्र स्वर्गलोका

इत्यस्य स्थाने स्वर्गे लोका इति पाठः। अर्थोऽपि भिन्नः। १।१।१५
'लोकादिं' इत्यस्य स्थाने 'लोकाग्निं' इति पाठः। १।१।१९ इत्यत्र 'प्रवक्ष्यन्ति' इत्यस्य स्थाने 'प्रक्ष्यन्ति' इति पाठः। १।१।२२ इत्यत्र 'एतस्य' इत्यस्य स्थाने 'एतैः' इति पाठः। सच व्याख्यात्रा 'एतेन' इतिपदेन व्याख्यातः। १।१।२८ इत्यत्र 'वर्णरतिप्रमोदानति-दीर्घे' इत्यस्य स्थाने 'वर्णरतिप्रमोदान्नातिदीर्घे' इति भिन्नार्थकः पाठः। एवमग्रिमवल्लीष्वपि बहवो भिन्नार्थपाठा उपलभ्यन्ते। समानार्थकपाठास्तु प्रतिपदं दरीदृश्यन्ते। समानवेदगतसमानशाखायां पाठभेदस्य कुत्राप्य-दृष्टत्वात्केन वा तत्र कारणेन भवितव्यमिति मीमांसायां कठशाखाया एव संप्रदायद्वयं स्यादित्यनायत्या कल्पनीयम्। यत आस्तिकाग्रेसरः शाङ्कर-मतानुयायी दिगम्बरानुचरमहाभागः कथमन्यथा पाठान्तराणि व्याख्येयत्वे-नाङ्गीकुर्यात्। सहस्रशः पाठभेदानां सत्त्वात्सर्वेऽप्येते कल्पिता इत्यपि वक्तुम-शक्यं सुधीभिः। काण्वमाध्यन्दिनशाखाभेदभिन्नत्वाद्यथा बृहदारण्यके पाठ-भेदास्तथैवात्रेत्यपि वक्तुमशक्यम्। यतः कठोपनिषदिति शाखाघटितमे-वास्या नाम दिगम्बरानुचरमहाभागेनादृतमतः संप्रदायभेदः स्यादिति कल्पनाद्गत्यन्तरं न पश्यामः। काठकोपनिषदथर्ववेदीयाप्यस्तीति वेबरमहा-भागो वदति तेनाथर्ववेदस्थां तामनुसृत्य दिगम्बरानुचरमहाभागेन व्याख्यात-मित्यपि कल्पयितुमशक्यं यतो दिगम्बरानुचरमहाभागोऽस्या यजुर्वेदगतत्वं 'यजुषि काठकेषु नाचिकेताग्निचयनप्रसंग एव तत्प्रसंगानुसारेण प्रायशोऽ-भिहितो न त्वियं परब्रह्मविद्यातः पुनस्तां व्याचिख्यासुः कठ आह' इत्यु-क्तार्थप्रकाशिकारम्भे स्पष्टमेव प्रतिजानाति। अयं पाठभेदविषयः पण्डितानां धिषणावैभवं दर्शयत्वित्याशास्महे च।

## ७ कठोपनिषदि सांख्यमतस्यादर्शनम्।

केचिदत्रोपनिषदि सांख्यमतादृतप्रधानादिशब्दसमानार्थकाव्यक्तादि-शब्ददर्शनात्सांख्यमतं प्रतीयते तन्मतबीजं वात्रास्ति पश्चात्तन्मतं वृद्धिमाप्नो-दित्यादि वदन्ति परन्तु तन्न विचारसहम्। यतो बादरायणेनैवानुमानिकाधि-करणे पूर्वोक्तशंका निराक्रियते। तथाहि—आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च। ब्र. सू. १।४।१ कठवल्लीषु श्रूयते 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः। १।३।११ इति। तत्र किमव्यक्त-शब्देन प्रधानमुच्यत उत पूर्वप्रकृतं शरीरमिति संशये सांख्यस्मृतौ महद-

व्यक्तपुरुषशब्दानां तत्तत्प्रत्ययेऽप्रसिद्धत्वादानुमानिकमनुमानगम्यं प्रधानमप्येकेषां शाखिनां प्रत्यक्षमव्यक्तशब्देन पठ्यत इत्यशब्दत्वमसिद्धमिति चेदिति पूर्वः पक्षः । सिद्धान्तस्तु न प्रधानम् । कुतः । शरीररूपकविन्यस्तगृहीतेः । 'शरीरं रथमेव तु' क. १।३।३ इत्यस्मिन्पूर्ववाक्ये शरीरस्य रथरूपकेण विन्यस्तस्य कल्पितस्याव्यक्तशब्देन गृहीतेर्ग्रहणात् । कथं तच्छब्दग्राह्यं शरीरमित्यत आह—दर्शयति च । कठोपनिषत्स्थः पूर्वापरवाक्यसन्दर्भः पर्यालोच्यमान औचित्येन प्रकृतं शरीरमेवाव्यक्तग्राह्यं दर्शयतीत्यर्थः ॥१॥ एतस्यैवार्थस्य 'सूक्ष्मं तु तदर्हत्वात् २ तदधीनत्वादर्थवत् ३ ज्ञेयत्वावचनाच्च ४ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ५ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ६ महद्वच्च ७' इति षड्भिः सूत्रैरधिकरणशेषभूतैर्विवरणं कृतम् । एतस्याधिकरणस्यायमेवार्थो रामानुजमाध्ववल्लभाचार्यैरपि स्वीकृतः । एवं चात्रोपनिषदि सांख्यमतस्पर्शो नास्तीति स्थितम् । तथा चात्रत्यसांख्यशब्दो वैदिकज्ञानपरस्तथैव व्याख्यातो भगवत्पूज्यपादैः ॥

## ८ विमतस्थलविमर्शः ।

अस्यामुपनिषदि बहुभिरेतद्देशीयैर्विदेशीयैश्च 'राममोहनराय विंडिश्मेन, पोले, वेबर, मूर, रेगॉड, गफ्, डॉयसन्, कोलब्रूक प्रभृतिभिः पण्डितवरेण्यैर्बहु पराक्रान्तम् । अहो वेदान्तवैभवम् । यत्र विदेशीया अपि स्वबुद्धिकौशलमुपयुञ्जते । एतैरन्यैश्च महाभागैर्यदनुकूलं निर्दिष्टं तद्विषये तदनुग्रहभरानूढ्वा यानि तैर्विमतस्थलानि दर्शितानि तानि विमृश्यन्ते ।

१ कोलब्रूकमहाभाग इमामुपनिषदं सामवेदगतां मनुते ब्रूते च शङ्कराचार्यैस्तथोक्तमिति । परमेतदसंगतम् । यतः सह नाववत्विति कृष्णयजुर्वेदशान्तिघटितत्वान्मुक्तिकोपनिषदि कृष्णयजुर्वेदोपनिषदां प्राथम्येन गृहीतत्वाच्चेयं कृष्णयजुर्वेदगतैव । सामवेदशान्तिघटिता त्वियं कोलब्रूकमहाभागेनापि नाधिगता । तथानिर्देशाभावात् । शङ्कराचार्यैरस्याः सामवेदगतत्वमुक्तमिति तु सुतरामसंगतम् । यतस्तथा निर्देशो न दृश्यते भाष्यपुस्तकेषु । किंच भाष्यशरीर एव स्वयमाचार्यैः सह नाववत्वित्यस्याः शान्तेरर्थः प्रदर्शितः । तथैवायं कोलब्रूकमहाभागस्य प्रमाद इति वेबरपण्डितेन स्पष्टमुक्तम् ।

२ प्रथमाध्यायप्रथमवल्ल्यां १६—१८ इति मन्त्रत्रयं पश्चात्केनचिद्ग्रन्थेऽन्तर्भावितं यतो मृत्युना प्रतिश्रुतं वरत्रयं न चतुर्थो वरः ।१।२।३

इत्यत्र नचिकेतसं प्रति यमेनोक्ते वाक्ये त्वया संका न स्वीकृतेत्युक्तं तन केनाचित्संका चतुर्थवरत्वेन दत्ता स्यादिति कल्पितम्। तथा कल्पयित्वा चतुर्थवरस्य बोधकाः श्लोकास्त्रयो निर्मिता मध्ये च क्षिप्ताः स्युः। तवैव नाम्ना भवितायमग्निरिति चतुर्थो वरो दत्त इत्यपि कल्पयित्वा पूर्वोक्तप्रक्षिप्तमन्त्रत्रये निबद्धम्। किंचैते त्रयो मन्त्रा अकाण्ड एव प्रक्षिप्ताः। यतः १।१।१५ मन्त्रस्थ 'पुनरेवाह तुष्टः' इत्युक्त्वा 'तमब्रवीत्' १।१।१६ इत्यग्रिमश्लोकस्यारम्भो न घटते। पुनरुक्तिदोषदुष्टत्वात्। किंच प्रक्षिप्तमन्त्रेषु किमपि नवीनं नास्ति। तथैव प्रक्षेप्ता रभसात्प्रवृत्तः सन् १।१।१९ मन्त्रे 'तवैव' इति पदद्वयमधिकं प्रक्षिप्य छन्दोभङ्गमप्यङ्गीचकारेति म्याक्स्मुल्लर-प्रभृतिभिः पण्डितैः साटोपमुच्यते। अस्या विप्रतिपत्तेर्यथायथं स्वरूपाधिगमार्थं विवादास्पदीभूतमन्त्रत्रयं पूर्वोत्तरमन्त्रसहितं निर्दिश्यते। तथाहि—

लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा।
स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः॥ १।१।१५
तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः।
तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण॥ १६॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू।
ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति॥ १७॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम्।
स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके॥ १८॥
एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण।
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व॥ १९॥

एतस्या विप्रतिपत्तेर्निराकरणे द्विविधः पन्थाः। तत्र प्रथमा परदण्डेन परस्ताडनीय इति न्यायमनुरुध्य। तस्याङ्गीकार एवं वक्तुं शक्यते यत्—वेबरमहाभागः (German) द्वितीयाध्यायः पश्चात्तन इति प्रस्तावे कारणान्तरमालायां प्रवृत्तायामिदमप्येकं कारणं प्रदर्शयति १।१।१७ इति मन्त्रस्थ-ब्रह्मजज्ञेत्यादिरचना प्राचीना तादृशी द्वितीयाध्याये नास्तीत्यतो द्वितीयाध्यायो नवीनः प्रथमाध्यायः प्राचीन इति। अयि विचारचातुरीचतुरा विद्वांसो विमर्शयन्तु। यं ब्रह्मजज्ञादिशब्दघटितं मन्त्रं प्राचीनत्वेनाङ्गीकरोति वेबरपण्डितस्तमेव म्याक्स्मुल्लरपण्डितः प्रक्षिप्तं मनुते। एवं परस्परविरुद्ध-मतवादिनो परद्वीपस्थपण्डिताः सुन्दोपसुन्दन्यायमनुकुर्वन्ति। द्वितीयः पन्था

नामैषां परस्परमतवैरुध्यमपहाय विमर्शः। तस्मिन्नङ्गीकृत एवं सिद्धान्तयितुं शक्यते यदियं 'एतेषां मन्त्राणामभावे न काचिदर्थन्यूनता' इतिरूपा विचारसरणिर्न साधीयसी यतः—बालकं पुनः पुनस्तमेवार्थं बोधयन्ती जननी यथा न पुनरुक्तिदोषभाक्तथा जामितादोषाभावाच्छुति-जनन्या विस्तरार्थं प्रवर्तिते ग्रन्थजाते सर्वत्रैव तथा वक्तुं सुशकम्। यथा पण्डितम्याक्स्मुल्लरेण तथास्माभिरप्यस्मिन्नेव प्रकरणे १।१।२९ इत्यत्र शङ्क्यते यदयं मन्त्रो न स्याच्चेत्तर्हि का क्षतिः। तथा चार्थाधिक्याभावादयं मन्त्रोऽपि प्रक्षिप्तः। यतस्तत्र चतुर्विंशतितममन्त्रार्थस्यैव विस्तरो नान्यत्किंचित्। न केवलमेकद्वित्रादिमन्त्रविषय एव किन्तु यदि म्याक्स्मुल्लरपण्डितेन 'प्रथमाध्यायतृतीयवल्ली निखिलापि प्रक्षिप्ता' इत्युक्तं स्यात्तदपि तद्विचारसरण्या शोभेतैव। यतस्तया निखिलवल्ल्या विना प्रवाहमाप्तस्य प्रधानार्थस्य न काचिन्न्यूनता। ततोऽर्थापत्तिवशात्कारुणिकश्रुतिस्वाभाव्यमालोच्य चैवं विचारसरणिरादेया यत् 'अनेन मन्त्रेणाधिकेन सता का क्षतिः नतु तदभावे का क्षतिरिति'। तथा च मीमांसायामङ्गीकृतायां विवादास्पदीभूतमन्त्रेषु सत्सु न कापि क्षतिः प्रत्युत श्रुतिस्वाभाव्यानुसारं पूर्वोक्तार्थस्य विस्तरशो वर्णनम्। पुनरुक्तिदोषः श्रुतौ न पदमादधातीति जननीदृष्टान्तेन पूर्वमेक्तमेव १।१।१९ इत्यत्र छन्दोभङ्गमगणयित्वापि तवैवेति पदद्वयं प्रक्षिप्तमित्यादिकं तु दुरुक्तम्। यतो १।१।१९ मन्त्रे तवैवेतिपदयोरभावे न कोऽप्यर्थस्तस्यावशिष्टभागस्य स्यादिति सुधियो विभावयन्तु। अस्यामुपनिषदि बहुषु स्थलेषु छन्दोभङ्गदोषस्योपलभ्यमानत्वादत्यल्पेन तेन दोषेण प्रक्षेपादिकल्पनं मुधापाण्डित्यस्य द्योतकम्। तथैव १।१।१४ मन्त्रं १।१।४ मन्त्रं च प्रक्षिप्तं मनुते वेबरमहाभागः। तस्यापि पूर्वोक्तैव द्वयी गतिः। तेन न कोऽप्यत्राल्पांशेनापि प्रक्षेप इति दृढं विश्वसिमः।

२ अस्या उपनिषदः पूर्वमेक एवासीदध्यायः पश्चाद्द्वितीयः केनचिन्निरमायि। इयं विप्रतिपत्तिरेव विचारणीयांशमूर्धन्यतामाप्नोति। यतः पण्डितैरधुनातनैः सिद्धान्तत्वेनैवास्या ग्रहणं क्रियते। अतः परद्वीपस्थमतानुसारं कारणमाला साविमर्शं पूर्वं प्रदर्श्यते। ततोऽस्मन्मतानुसारमेतस्या विप्रतिपत्तेरसांगत्यं प्रदर्श्यते। वेबरपण्डितमतेनात्र या कारणमाला निर्दिष्टा सा प्रदर्श्यते। तथाहि—१ ब्रह्मजज्ञमिति पदं प्राचीनं नाधुनिकभाषायां संभवति। तच्च प्रथमाध्याये दृश्यते। द्वितीयाध्याये तादृशप्राचीनशब्दाभाव-

स्तेन स द्वितीयोऽध्यायोऽर्वाचीनः। एतन्न समीचीनं यतः पदानां प्राचीननवीनत्वविचारो नैकान्तिकफलकः। २ विद्याया वर्णनं प्रथमाध्याये नास्ति अस्ति तु द्वितीयाध्यायेऽतः स पश्चात्तनः। तदेतत्प्रमादघटितम्। यतः प्रथमाध्याये १।१।२० इत्यारभ्य विद्याविषयकमेव वर्णनम्। ३ प्रथमोऽध्यायः सर्वाङ्गपूर्णस्तत्रार्थान्तरं वर्णनीयं नावशिष्यते। अन्ते फलश्रुतिरप्यस्ति प्रकरणसमाप्तिबोधिका। ततो द्वितीयोऽध्यायः प्रवृत्तः। तत्र किमपि नवीनं न वर्ण्यते किन्तु केवलं ग्रन्थान्तरस्थनिर्देशाः संगृह्यन्ते (पूर्वाध्यायगता एवार्था विस्तार्यन्ते) उपनिषदन्तरस्थेन तदप्येष श्लोक इति निर्देशेन 'एतद्वै तत्' इत्येतदुपनिषत्स्थनिर्देशः समानार्थकः। वर्णनपद्धतिरपि द्वितीयाध्यायस्य पश्चात्तनत्वबोधिका यतो द्वितीयाध्याये नचिकेता इति नाम नोपलभ्यते किन्तु गौतम इति तत्र गृह्यते। प्रथमाध्याये गौतमेति नाम नास्ति। यद्यपि द्वितीयाध्याये २।३।१८ इति मन्त्रे नाचिकेत इति नामोपलभ्यते तथापि तद्ग्राह्यतां नार्हति। यतः तं विद्याच्छुक्रममृतमित्यध्यायसमाप्त्यनन्तरं प्रवृत्तत्वात्केनचित्प्रक्षिप्तः स मन्त्रः। नाचिकेतेति नामाप्यसङ्गतं यतः पूर्वप्रवाहे तस्य नचिकेता इति नाम दृश्यते। अतो द्वितीयोऽध्यायः पश्चात्तन इति। परमेतैरुपोद्बलकैर्द्वितीयाध्यायस्य निष्प्रत्यूहं पश्चात्तनत्वं सेत्स्यति वेति सुधीभिरुह्यम्। एतद्विषये डॉयसन् महाभागेन या कारणपरम्परा प्रदर्श्यते सेदानीं निर्दिश्यते। तथाहि—१ प्रथमाध्यायतृतीयवल्लीवर्णनापेक्षया द्वितीयाध्यायतृतीयवल्लीस्थं वर्णनं संगतिरहितं विशेषतः पारिभाषिकत्वबोधकं तेन द्वितीयोऽध्यायः पश्चात्तनः। पारिभाषिकवर्णनं पश्चाद्भवत्वे हेतुरिति डॉयसन् महाभागस्याभिमानः। २ द्वितीयाध्याये प्रथमवल्ल्यां दशमैकादशमन्त्रयोर्यद्वर्णनं तज्जगतो नानात्वमाभासिकत्वं च बोधयति तत्परिणतस्य वेदान्तस्य द्योतकमतो द्वितीयोऽध्यायः पश्चाद्भवः। प्रथमाध्याये त्वीदृशवर्णनं नास्त्यतः स नवीनः। परमियं विचारशैली वेबरमहाभागस्य स्वाभ्युपगमं विहन्ति। यतः परद्वीपस्थपण्डितैः प्राचीनतमत्वेनादृतेषु बृहदारण्यकादिषु 'नेति नेति' 'नेह नानास्ति किंचन' इत्यादयः परिणततत्त्वस्य वेदान्तस्य बोधका निर्देशाः समुपलभ्यन्ते। तादृशनिर्देशेषु सत्स्वपि बृहदारण्यकस्य प्राचीनत्वं कठोपनिषदो नवीनत्वमेवेति कथनं तु कुक्कुट्याः प्रथममर्धं पाकाय द्वितीयमर्धं प्रसवायेति वचनमनुकुर्यात्। एवमेव तेन महाभागेन बहूनि कारणानि प्रदर्शितानि। तान्यधुना केवलं संगृह्यन्ते तेषामुत्तराणि तु

न प्रदर्श्यन्ते पूर्वोक्तदिशा सुधीभिः स्वयमूहितुं शक्यत्वात्। ३ द्वितीयाध्यायद्वितीयवल्ली ९–११ मन्त्रस्था विचाराः परिणततत्त्वस्य वेदान्तस्य बोधकाः। ४ प्रथमाध्याये कथा सुसंगता केवलं तत्रत्याः केचित्प्रक्षिप्ता भागास्त्याज्याः। ५ द्वितीयाध्याये 'एतद्वै तत्' इति द्वादशवारमुपलभ्यते। तच्च 'तत्त्वमसि' इति छान्दोग्यवाक्येन समानार्थकं तेन द्वितीयाध्यायग्रथने छान्दोग्यानुकरणेच्छा प्रबलासीत्। ६ द्वितीयाध्याय ओँकारस्योपासना समाम्नायते। सा च पश्चातनी यतोऽथर्ववेदे ओँकारोपासनाया विस्तरस्तेन द्वितीयोऽध्यायोऽथर्ववेदीयः। वेबरमहाभागोऽप्येवं वक्ति। यत् प्रथमाध्यायात्मिकोपनिषद्यजुर्वेदस्था। प्रथमद्वितीयाध्यायात्मिका त्वथर्ववेदगता। मया पुस्तकद्वयं लब्धं यत्रास्या उपनिषदोऽथर्ववेदगतत्वं स्पष्टं निर्दिश्यते। तच्च पुस्तकद्वयं ( India office ) इत्यत्र वर्तत इति। ७ प्रथमाध्यायद्वितीयवल्लीपञ्चममन्त्रे 'पण्डितं मन्यमानाः' इत्यादिरूपिणी निन्दा क्रियते। सा च प्रतिवादिषु जीवत्सु संभवति। यथा चार्वाकनिन्दा तत्समकालभाविनीषु भगवद्गीतासु दृश्यते। द्वितीयाध्याये तु तादृशी निन्दा नास्ति। तेन निन्दाप्रयोजनं प्रतिवादिस्थितिरूपं द्वितीयाध्यायग्रथनसमये नासीदिति प्रतीयते। अतः कालपार्थक्यबोधकप्रयोजनभेदादपि द्वितीयोऽध्यायः पश्चात्तनः। पण्डितंमन्यमाना इत्यधिक्षेपवचनस्वारस्यादप्येवं वक्तुं शक्यते यदस्य प्रथमाध्यायस्य कालः प्राचीन इति। ८ तद्विष्णोः परमं पदम्। ऋ. १।२।२२। २०।२१ इति वाक्यमृग्वेदस्थं प्रथमाध्याय उद्धृतमत ऋग्वेदसंस्कारघटितत्वात्प्रथमोऽध्यायः प्राचीनतर इति। एवं कारणमालां प्रदर्श्याभ्यां पण्डिताभ्यां द्वितीयाध्यायस्य पश्चात्तनत्वं स्थापितम्॥

परमेतन्न विचारसहम्। यत इयं हि वैदिकी परिपाटी। यत्पूर्वं कोऽप्यर्थः सामान्यतया वर्ण्यते ततः स एव मन्दश्रोतृबोधायोपमानादिपूर्वकं विस्तरेण बोध्यते। सुस्पष्टं चैतत् 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इति महावाक्यवर्णनादिषु। एवं चात्रोपनिषदि प्रथमाध्याये संक्षेपतः श्रेयःप्रेयसी वर्णिते। ततो द्वितीयाध्याये विद्याविषयकाङ्गोपाङ्गादिघटिते ते एव श्रेयःप्रेयसी विस्तरशो वर्णिते। तेन द्वितीयाध्यायस्य पश्चात्तनत्वकथनं श्रुतिपरिपाट्यनभिज्ञताविलसितमित्येव संप्रति ब्रूमः। विप्रतिपन्नपण्डितदर्शितानां कारणानां निःसारत्वमेवास्या विप्रतिपत्तेर्निःसारताद्योतनायालमिति प्रतीमश्च।

## ९ शाङ्करभाष्यम् ।

श्रीमच्छङ्कराचार्यैः प्रस्थानत्रये भाष्यं व्यरचि तैर्येन क्रमेणोपनिषदादयो व्याख्याता एतद्विषयकमन्यत्रास्माभिर्निबन्धरूपेण प्रतन्यते। अत्र केवलं कठोपनिषद्भाष्यविषयकमल्पशो विव्रियते। इदं भाष्यमाचार्यकृतिकुसुममालिकायां प्रथमकुसुमभूतम्। यतोऽत्रादौ गद्यात्मकं मङ्गलमस्ति। उपनिषच्छब्दव्युत्पत्तिश्चात्र प्रदर्श्यते। यद्यपि मुण्डकोपनिषद्भाष्यारम्भेऽपि सा दर्शिता तथापि तस्या अल्पीयस्त्वम्। अनुबन्धचतुष्टयं च प्रदर्शितम्। वृत्तिग्रन्थवत् सुलभैः पदैरर्थः प्रदर्श्यते। 'अल्पग्रन्था वृत्तिः' इत्यादि स्वयमेव प्रतिज्ञायते च। आचार्याः कृष्णयजुर्वेदाध्यायिनस्तेनापि कृष्णयजुर्वेदान्तर्गताया अस्या उपनिषदो भाष्यस्य प्राथम्यं युक्तिसहम्। उपनिषद्भाष्यान्तरवदत्र बहूनामवतारितश्रुतिस्मृतिवाक्यानामभावोऽस्य प्राथम्यमुपोद्बलयति। भाष्यस्यायं प्रथमः प्रसंग इति कृत्वा केनोपनिषद्भाष्यादिवदस्या उपनिषदः पूर्वापरग्रन्थसंगतिर्न दर्शिता। कुत्रत्येति शाखानिर्देशोऽपि न कृतः केवलं 'अथ काठकोपनिषद्वल्लीनां सुखार्थप्रबोधनार्थमल्पग्रन्था वृत्तिरारभ्यते' इत्युक्तम्। आचार्याः सदा पाठक्रमेण व्याख्यान्ति नान्वयक्रमेण। अस्यामुपनिषदि २।३।६ मन्त्रे तु तैः पृथगुत्पद्यमानानामिति पदस्यान्वयक्रमेण व्याख्यानमकारि तेनैवं कल्पयितुं सुशकं यत्तैरादृतस्यास्य भाष्यस्य प्राथम्यान्नासीद् दृढतरो नियम एतद्भाष्यकरणसमये 'अतस्ता यथाप्रतिभानं व्याचक्ष्यहे' इति १।१।१ इत्यत्राचार्याणामुक्तिः केवलं विनयद्योतिका न स्यादन्यत्रानुपलम्भादतोऽपि प्राथम्यमस्या आचार्यकृतेरिति दृढं प्रतीतिपदमारोहति।

१ अथ भाष्यस्य प्राथम्यम्।

त्रिणाचिकेत इति १।१।१७ कारिकायां शाङ्करभाष्ये प्रत्यक्षानुमानागमैरिति प्रमाणत्रयस्यैव ग्रहणं कृतं तत् षट्सु प्रमाणेषु प्रत्यक्षानुमानागमानां प्रामाण्यं द्योतयितुं स्यात्। वस्तुतस्तु प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्ध्याख्यानि षडपि प्रमाणानि जैमिनीयशास्त्रवदेवाचार्याणां संमतानि सर्वत्र तद्ग्रन्थेषु सर्वेषामुपलम्भात्। वेदस्यैवाप्रतिहतं प्रामाण्यं रवेरिव रूपविषय इति तन्मतमिति त्वन्यत्। १।३।९ इत्यत्र विष्णोरित्यस्य व्याख्यां कुर्वद्भिराचार्यैः विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य' इत्युक्तं तेनाचार्याणां वसुदेवपुत्रे सगुणपरमेश्वरे तात्पर्यमिति न मन्तव्यं तत्र वासुदेवपदस्य

२ भाष्यविचारः।

निर्गुणपरमेश्वरार्थकत्वात्। तथैवार्थकं व्याख्यातं गोपालयतीन्द्रैस्तत्र तत्र टीकायाम्। तथाहि—'वासयति भूतानि स्वस्मिन्निति वासुः स चासौ देवश्च दीव्यत इति स्वयंप्रकाशः स वासुदेव इत्यर्थः। अनेन तत्पदवाच्यमभिहितम्।' अयमेवार्थोऽभिमत आचार्याणामन्यथा तत्रैव 'पदं स्थानं सत्त्वम्' इति तदुक्तिर्न संगच्छेत। ब्रह्मणः पर्यायत्वेन सगुणेश्वरस्य वासुदेवस्य निर्देशोऽपि विरुध्येत। २।३।१ इत्यत्र गोपालयतीन्द्रैर्व्याख्यायामयं पाठष्टिप्पणीकारैर्गृहीत इत्युक्तं तेन टिप्पणीनाम्नी काचिद्व्याख्या शाङ्करभाष्यस्य स्यादिति प्रतीयते। अत्रैव मन्त्रे भाष्यकृद्भिः संसारवृक्षस्य रूपकमादृतं तत्कविकुलगर्वविहन्तृ। नैतादृशं रूपकवर्णनं सामान्यकविजनसुलभम्।

## १० प्रकाशिका।

श्रीरङ्गरामानुजाचार्या महामीमांसका वैयाकरणाश्चासन्। यतोऽत्र तैर्बहवो मीमांसाव्याकरणनिर्देशा उद्धृताः। केनोपनिषत्प्रकाशिकाया इयं प्रकाशिकातीव विस्तृता तत्रैतदेव निदानम्। यावच्छक्यं मीमांसानिर्देशैः परिचिता भवन्तुच्छात्रा इत्यासीन्मतिरेषां तेन यथोत्तरपक्षस्य तथा पूर्वपक्षस्याप्युपोद्बलकत्वेनैतैर्मीमांसानिर्देशा उदध्रियन्त। किंचैतस्याः प्रकाशिकाया विस्तारेऽन्यदपि कारणं यदेतैर्महाभागैः श्रीभाष्यस्य श्रुतिप्रकाशिकायाश्च पूर्वापरसंगतिर्विरोधाभावश्च प्रसंगमुत्पाद्य प्रदर्श्येत इति। एतेन पूर्वापरसंगतिविरोधाभावप्रदर्शनेनैतदनुमातुं शक्यते यदेतेषां समये श्रीभाष्ये श्रुतप्रकाशिकायां च भूयस्यो विप्रातिपत्तयः पण्डितमण्डलीगृह्यमाणा आसंस्ता अपाकर्तुमेतैर्महाभागैः कठोपनिषत्प्रकाशिकाकृतिरूपः प्रसंग उत्पादितः। तद्द्वारा पूर्वोक्तविप्रतिपत्तयः समाहिताश्चेति। अन्यथा कठोपनिषद्भाष्यव्याख्यायां सूत्रव्याख्यानरूपस्य श्रीभाष्यस्य तद्व्याख्यानभूतायाः श्रुतप्रकाशिकायाश्च पूर्वापरविरोधनिरासस्य कः प्रसंगः। १।१।१७ मंत्रे त्रिणाचिकेत इत्यस्य व्याख्यायां 'त्रिणाचिकेतः—अयं वाव यः पवते इत्याद्यनुवाकत्रयाध्यायी' इति योऽर्थः कृतः स पूर्वापरालोचनया न संगच्छते। अनुवाकत्रयाध्ययनस्य पूर्वमसम्बन्धात्। यतः पूर्वं यमेन नचिकेतसे लोकादिरग्निरिष्टकास्तत्प्रमाणं च १।१।१५ इत्यनेनोक्तम्। अनुवाकत्रयाध्ययनं तु नोक्तम्। ततः परं १।१।१९ इत्यत्र 'यो वाप्येताम्' इति मन्त्रोऽधिक एव व्याख्येयत्वेनाङ्गीकृतः। स च शाङ्करभाष्ये न गृह्यते। एतच्च रङ्गरामानुजाचार्यैरपि

स्वीक्रियते 'कैश्चिदव्याकृतः' इति कथयद्भिः। अयं मन्त्रो न केवलं शङ्कराचार्यैरेवाव्याख्यातः किन्तु तद्विरुद्धैः श्रीरामानुजाचार्यानन्तरभाविभिरपि माध्वादिभिरव्याख्यातः। तेनायं निर्मूल इवाभाति। रङ्गरामानुजाचार्यैः 'अथापि प्रत्ययितव्यतमैर्व्यासादिभिरेव व्याख्यातत्वान्न प्रक्षेपशङ्का कार्या' इति केवलमुक्तं न च यत्र व्यासादिभिर्व्याख्यातं तत्प्रदर्शितम्। किंच १।१।१७ मंत्रे तरति जन्ममृत्यू इत्यस्य व्याख्यायां 'करोति तद्येन पुनर्न जायते' इत्यनेनैकार्थ्यात् इति १।१।१९ मंत्रस्याश्रयः कृतः। तथा १।१।१९ इति मन्त्रस्थं करोति तद्येन पुनर्न जायते' इति व्याख्यातुं १।१।१७ मन्त्रस्थं 'त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू' इत्यङ्गीकृतं सोऽयमन्योन्याश्रयः। एतद्व्याख्यानं सुधीभिर्विभावनीयम्। रङ्गरामानुजार्यैः १।३।१३ इत्यादिमन्त्रेषु तत्र तत्र 'इमं मन्त्रं प्रस्तुत्येत्थं हि भाष्यकृता' इति केवलं भाष्योक्तिरुद्ध्रियते नतु स्वयं तदनुसारं व्याख्यायते। ग्रन्थकृतामयं पन्थाः—यत्प्रथमं स्वयं व्याख्येया मन्त्रास्ततस्तथा चोक्तं भाष्यकृतेति प्रामाण्यप्रदर्शनम्। अत्र 'क्षेमाय यः करुणया' इति श्रीरामानुजाचार्याणां वर्णनं ततस्तृतीयश्लोकेऽपि पुनस्तस्यैव वर्णनम्। तेनेत्थं प्रतीयते यत्क्षेमायेति श्लोको न ग्रन्थशरीरस्थः किन्तु सर्वैः सर्वदा मङ्गलत्वेन गृह्यमाण इति। अतएव ग्रन्थान्तेऽपि स उपलभ्यते। अन्याः काश्चनात्रत्या अनुपपत्तयो बालबोधिन्यां प्रदर्शितास्तास्तत एवावगन्तव्याः।

## ११ बालबोधिनी।

अस्या उपनिषदो व्याख्याद्वये बालबोधिनी नाम वृत्तिर्मया व्यरचि। सा च यावच्छक्यमन्वर्थनाम्नी यथा स्यात्तथा प्रयतितम्। यद्यपि शाङ्करभाष्य आनन्दज्ञानकृता गोपालयतीन्द्रप्रणीता च व्याख्योपलभ्यते तत्र द्वितीया विस्तृता तथापि नव्यच्छात्राणां मन्दव्युत्पत्तीनां कृतेऽवश्यमस्या उपयोगो भविष्यतीति संभावये। किंच प्रकाशिका नाद्यापि व्याख्याता। केनोपनिषत्प्रकाशिकायां नैकमप्यासीन्मीमांसास्थलमत्र तु प्रतिपत्रं मीमांसानिर्देशा उपलभ्यन्ते तेषां सर्वेषामवबोधायैषा व्याख्या यथा प्रभवेत्तथा प्रयतितं ग्रन्थविस्तरमगणयित्वापि। यत्र मीमांसानिर्देशास्तत्र तत्तानि सूत्राणि साकल्येन निर्दिष्टानि। अधिकरणं यत्र भिन्ननामकमत्र निर्दिश्यते तस्य मीमांसाशास्त्रप्रसिद्धं नामाध्यायपादादिसंख्यासहितं निर्दिष्टम्। येन च तदधिगमः सुकरः स्याज्जिज्ञासूनाम्। सूत्रादीनामर्थाः शाबरभाष्यानुसारं

प्रदर्शिताः। यथासंभवं माधवाचार्यप्रणीतजैमिनीयन्यायमालास्था अधिकरण-श्लोकाश्च दर्शिताः। शाबरभाष्यादिगृहीतविषयवाक्यानामर्थाः सुलभपदैर्वि-वृताः। १।१।१९ इत्यत्रत्यप्रकाशिकायां शाबरभाष्यानुसारमेव सर्वे पूर्वोत्तर-पक्षाः संगृहीतास्तेषां सुखावबोधार्थं संपूर्णं तत्रत्यं शाबरभाष्यमेव निर्दिष्टम्। तथैव व्याकरणनिर्देशविषयेऽप्यर्थादिप्रकाशनं कृतम्। किंच प्रकाशिकायां यत्र साङ्ख्यबौद्धादिमतं खण्डितं तत्र तत्तन्मतानि संक्षेपेण बालबोधिन्यां प्रदर्शितानि तेन मतान्तरज्ञानं छात्रबुद्धौ पदं कुर्यात्। अत्र पुस्तके केनोपनिषद्वत् भिन्नमतस्थं व्याख्याद्वयमेकत्र मुद्रितमन्ते बालबोधिनी पत्रसंख्यानिर्देशपूर्वकं प्रतिमन्त्रं न्यवेशि। व्याख्याद्वयनिर्दिष्टवचसां च स्थलानि लब्धालब्ध-विभागेन प्रदर्शितानि। तस्यैतस्य पुस्तकस्य प्रणयनेऽयमेवासीत्प्रधानो हेतुर्यदिदं छात्रगणान्सम्यग्व्युत्पादयत्विति। स चायं हेतुः कियतांशेन सफल-तामयात्किंवा तत्र न्यूनं तद्दृष्टिपथमयादिति छात्रा यथाकालं ज्ञापयन्तु। अधुनैकं प्रधानं कार्यमवशिष्यते यद्विना नायं लेखः समापयितुं पार्यते। तत्कार्यमेतदस्य पुस्तकस्य संसिद्धौ बहवो गन्था मयालोचितास्तत्कर्तृणामनु-ग्रहभरो मया वोढव्यस्तथा शार्मण्यादिभाषाविज्ञानां **डॉ. श्रीपाद कृष्ण बेलवलकर एम् ए.** इत्येतेषां, सरस्वतीभूषणेत्यन्वर्थोपाधिं धारयतां प्रमाण-शास्त्रप्रमाणितमतीनां किंजवडेकरोपाव्ह **वामनशास्त्रिणां** चानुग्रहभरस्योद्वह-नम्। एतत्कार्यं मया महता प्रमोदेनानुष्ठीयते। तदेतत्पुस्तकमुपयुज्य विद्यार्थिनः कृतकार्या भवेयुर्विद्वांसश्च विमर्शशालिनो विमत्सराः कृपयोप-लभ्यमानं मानुषशेमुषीसुलभं शास्त्राव्युत्पत्तिजन्यं वा प्रमादं दर्शयेयुस्तेन कृतकृत्यतामानयिष्याम्यात्मानमिति मन्यमानः---

| | |
|---|---|
| पुण्यपत्तने—अश्विनशुक्लप्रतिपत् १८४१ मिते शाके संवत्सरे | **विद्वद्वशंवदः पाठकोपाव्हस्त्र्यम्बक-तनूजनुः श्रीधरशर्मा।** |

# अथ कृष्णयजुर्वेदगतकठशाखोक्ता

ॐ

# काठकोपनिषत्

श्रीशंकराचार्यविरचितभाष्यश्रीरंगरामानुजविरचितप्रकाशिकासमेता ।

ॐ सह नाववितिं शान्तिः ।

**ॐ उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ ।**
**तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥**

[ शांकरभाष्यम् ] ॐ नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्याय नचिकेतसे च । अथ काठकोपनिषद्वल्लीनां सुखार्थप्रबोधनार्थमल्पग्रन्था वृत्तिरारभ्यते । सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति । उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते । केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इत्युच्यते । ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया[1] निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्[2]विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते । तथा च वक्ष्यति—“ निचाय्य तं मृत्युमुखात्प्रमुच्यते ” क. ३।१५

[ प्रकाशिका ] अथ कठवल्लीव्याख्या ।

अतसीगुच्छसच्छायमञ्चितोरःस्थलं[3] श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान्गुरूनपि ।
व्याख्यास्ये विदुषां प्रीत्यै कठवल्लीर्यथामति ॥ २ ॥

उशन्कामयमानः । वश कान्तावित्यस्माच्छतरि “ ग्रहिज्या ” पा. सू. ६ । १ । १६ इत्यादिना संप्रसारणम् । ह वा इति वृत्तार्थस्मरणार्थौ नि-

---

१ तन्निष्ठतयेतिस्थाने तन्निश्चयेति पाठः । २ हिंसनादित्यस्य स्थाने विशसनादिति पाठः ।

३ क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः । वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥ १ ॥

[ शांकरभाष्यम् ] इति । पूर्वोक्तविशेषणान्मुमुक्षून्वा परं ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत् । तथा च वक्ष्यति—" ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः" क. ६।१८इति । लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते । तथा च वक्ष्यति—" स्वर्गलोका अमृतत्वं भजन्ते " क. १ । १३ इत्यादि । ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति । उपनिषदमधीमहेऽध्यापयाम इति च । एवं नैष दोषः । अविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रन्थमात्रेऽसंभवाद्विद्यायां च संभवाद्ग्रन्थस्यापि तादर्थ्येन तच्छब्दत्वोपपत्तेः । आयुर्वै घृतमित्यादिवत् । तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्तते ग्रन्थे तु भक्त्येति। एवमुपनिषन्निर्वचनेनैव विशिष्टोऽधिकारी विद्यायामुक्तः । विषयश्च विशिष्ट उक्तो विद्यायाः परं ब्रह्म प्रत्यगात्मभूतम् । प्रयोजनं चास्या उपनिषद आत्यन्तिकी संसारनिवृत्तिर्ब्रह्मप्राप्तिलक्षणा । संबन्धश्चैवंभूतप्रयोजनेनोक्तः । अतो यथोक्ताधिकारिविषयप्रयोजनसंबन्धाया विद्यायाः करतलन्यस्तामलकवत्प्रकाशकत्वेन विशिष्टाधिकारिविषयप्रयोजनसंबन्धा एता वल्ल्यो भवन्तीति। अतस्ता यथाप्रतिभानं व्याचक्ष्महे । तत्राख्यायिका विद्यास्तुत्यर्था । उशन्कामयमानो. ह वा इति वृत्तार्थस्मरणार्थौ निपातौ । वाजमन्नं तद्दानादिनिमित्तं श्रवो यशो यस्य स वाजश्रवा रूढितो वा तस्यापत्यं वाजश्रवसः किल विश्वजिता सर्वमेधेनेजे तत्फलं कामयमानः । स तस्मिन्क्रतौ सर्ववेदसं सर्वस्वं धनं ददौ दत्तवान् । तस्य यजमानस्य ह नचिकेता नाम पुत्रः किलास बभूव ॥ १ ॥

[ प्रकाशिका ] पातौ । फलमिति शेषः । वाजश्रवसः । वाजेनान्नेन दानादिकर्मभूतेन श्रवः कीर्तिर्यस्य स वाजश्रवास्तस्यापत्यं वाजश्रवसः । रूढिर्वा वाजश्रवस इति । स किलर्षिर्विश्वजिता सर्वस्वदाक्षिणेन यजमानस्तस्मिन्क्रतौ सर्ववेदसं सर्वस्वं ददौ दत्तवानित्यर्थः । उशन्नित्यनेन कर्मणः काम्यत्वाद्दक्षिणासाद्गुण्यमावश्यकमिति सूच्यते। आस बभूव। "छन्दस्युभयथा" पा.सू. ३।४।११७ इति लिटः सार्वधातुकत्वात् " स्वस्तये ताक्ष्यर्म् " इत्यादिवदस्तेर्भूभावाभावः ॥ १ ॥

---

१ भक्त्येति स्थाने भाक्त इति पाठः ।

तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु
श्रद्धाविवेश सोऽमन्यत ॥ २ ॥
पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥

[ शांकरभाष्यम् ] तं ह नचिकेतसं कुमारं प्रथमवयसं सन्तमप्राप्तप्रजननशक्तिं बालमेव श्रद्धास्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ताविवेश प्रविष्टवती । कस्मिन्काल इत्याह—ऋत्विग्भ्यः सदस्येभ्यश्च दक्षिणासु नीयमानासु विभागेनोपनीयमानासु दक्षिणार्थासु गोषु स आविष्टश्रद्धो नचिकेता अमन्यत[1] ॥ २ ॥

कथमित्युच्यते—पीतोदका इत्यादिना । दक्षिणार्था गावो विशेष्यन्ते । पीतमुदकं याभिस्ताः पीतोदकाः । जग्धं भक्षितं तृणं याभिस्ता जग्धतृणाः । दुग्धो दोहः क्षीराख्यो यासां ता दुग्धदोहाः । निरिन्द्रिया

[ प्रकाशिका ] तं कुमारं सन्तं बालमेव सन्तमृत्विग्भ्यो दक्षिणासु गोषु नीयमानासु सतीषु श्रद्धास्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ताविवेशाविष्टवती । यद्यपि यदानतिकरं द्रव्यं तद्दक्षिणेत्युच्यत एका चासौ ऋतावानतिरिति । तदुपाधिको दक्षिणाशब्द एकवचनान्ततामेव लभते । अत एव भूनामकैकाहक्रतौ तस्य धेनुर्दक्षिणेत्यत्र कृत्स्नस्य गवाश्वादेः प्रकृतस्य दाक्षिण्यस्य निवृत्तिरिति ' तस्य धेनुरिति गवाम् ' जै० १० । ३ । १४ । ५६ इति दाशमिकाधिकरणे स्थितं तथापि दक्षिणाशब्दोऽयं भृतिवचनः स च कर्मापेक्षयापि प्रवर्ततेऽस्मिन्कर्मणीयं भृतिरिति, कर्त्रपेक्षयापि प्रवर्ततेऽस्मिन्कर्मण्यस्य पुरुषस्येयं भृतिरिति । ततश्च ऋत्विग्बहुत्वापेक्षया दक्षिणाबहुत्वसंभवाद्दक्षिणास्विति बहुवचनमुपपद्यते । अत एव ऋतपेये—"औदुम्बरः सोमचमसो दक्षिणा " " प्रियाय सगोत्राय ब्रह्मणे देयः " इत्यत्रैकवाक्यतापक्षे ब्रह्मभागमात्रेऽपि दक्षिणाशब्दस्यावयवलक्षणामन्तरेण मुख्यत्वोपपत्तेस्तन्मात्रबाध इत्युक्तं दशमे "यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात्" जै. सू. १०।१९।७२ इत्यधिकरणे । ततश्च क्रत्वपेक्षया दक्षिणैक्येऽपि ऋत्विगपक्षेया दक्षिणाभेदसंभवाद्दक्षिणास्विति बहुवचनस्य नानुपपत्तिरिति द्रष्टव्यम् ॥ २ ॥

---

१ अमन्यतेत्यस्मात्परमालोचितवानिति पाठः ।

**स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयं तꣳ होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥**

**बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किꣳस्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥**

[ शांकरभाष्यम् ] अप्रजननसमर्था जीर्णा निष्फला गाव इत्यर्थः । यास्ता एवंभूता गा ऋत्विग्भ्यो दक्षिणाबुध्या ददत्प्रयच्छन्ननन्दा अनानन्दा असुखा नामेत्येतद्ये ते लोकास्तान्स यजमानो गच्छति ॥ ३ ॥

तदेवं क्रत्वसंपत्तिनिमित्तं पितुरनिष्टं फलं मया पुत्रेण सता निवारणीयमात्मप्रदानेनापि क्रतुसंपत्तिं कृत्वेत्येवं मत्वा पितरमुपगम्य स होवाच पितरं हे तत तात कस्मै, ऋत्विग्विशेषाय दक्षिणार्थं मां दास्यसि प्रयच्छसीत्येतत् । एवमुक्तेन पित्रोपेक्ष्यमाणोऽपि द्वितीयं तृतीयमप्युवाच कस्मै मां दास्यसि कस्मै मां दास्यसीति । नायं कुमारस्वभाव इति क्रुद्धः सन्पिता तं ह पुत्रं किलोवाच मृत्यवे वैवस्वताय त्वा त्वां ददामीति ॥ ४ ॥

स एवमुक्तः पुत्र एकान्ते परिदेवयांचकार । कथमित्युच्यते—बहूनां

[ प्रकाशिका ] श्रद्धाप्रकारमेव दर्शयति । पीतमुदकं याभिस्ताः पीतोदकाः जग्धं भक्षितं तृणं याभिस्ता जग्धतृणाः । दुग्धो दोहः क्षीराख्यो याभिस्ता दुग्धदोहाः । निरिन्द्रिया अप्रजननसमर्था जीर्णा निष्फला इति यावत् । या एवंभूता गावस्ता ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत्प्रयच्छन् । अनन्दा असुखास्ते शास्त्रप्रसिद्धा लोकाः सन्ति नाम खलु । तत्र स यजमानो गच्छत्येवममन्यतेत्यर्थः ॥ ३ ॥

दीयमानदक्षिणावैगुण्यं मन्यमानो नचिकेताः स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छन्नास्तिकाग्रेसरः पितरमुपगम्योवाच तात कस्मा ऋत्विजे दक्षिणार्थं मां दास्यसीति । स एवमुक्तेनापि पित्रोपेक्ष्यमाणोऽपि द्वितीयं तृतीयमपि पर्यायं कस्मै मां दास्यसीत्युवाच । एवं निर्विद्यमानः पिता कुपितस्तं पुत्रं मृत्यवे त्वा ददामीत्युक्तवान् । एवमुक्तोऽपि पुत्रो विगतसाध्वसशोकः पितरमुवाच । सर्वेषां मृत्युसदनगन्तॄणां पुरतो मध्ये वा गच्छामि न तु मन्थरः पश्चात् । मृत्युसदनगमने न कोऽपि मम विचार इति भावः ॥४॥

किं तर्हि तत्राह—मृत्युर्मयाद्य यत्करिष्यति तत्तादृशं यमस्य कर्तव्यं

**अनुपश्य यथा पूर्वे प्रतिपश्य तथापरे । सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥ ६ ॥**
**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।**

[ शांकरभाष्यम् ] शिष्याणां पुत्राणां[1] वैमि गच्छामि प्रथमः सन्मुख्यया शिष्यादिवृत्त्येत्यर्थः। मध्यमानां च बहूनां मध्यमयैव वृत्त्यैमि। नाधमया कदाचिदपि ।तमेवं विशिष्टगुणमपि पुत्रं मां मृत्यवे त्वा ददामीत्युक्तवान्पिता । स किंस्विद्यमस्यं कर्तव्य प्रयोजनं मया प्रत्तेन करिष्यति यत्कर्तव्यमद्य । नूनं प्रयोजनमनपेक्ष्यैव क्रोधवशादुक्तवान्पिता । तथापि तत्पितुर्वचो मृषा मा भूदित्येवं मत्वा परिदेवनापूर्वकमाह पितरं शोकाविष्ट किं मयोक्तमिति ।।५।।
अनुपश्यालोचय निभालयानुक्रमेण यथा येन प्रकारेण वृत्ताः पूर्वेऽतिक्रान्ताः पितृपितामहादयस्तव । तान्दृष्ट्वा च तेषां वृत्तमास्थातुमर्हसि वर्तमानाश्चापरे साधवो यथा वर्तन्ते तांश्च प्रतिपश्यालोचय तथा । न च तेषु मृषाकरणं वृत्तं वर्तमानं[2] वास्ति । तद्विपरीतमसतां च वृत्तं मृषा करणम् । न च मृषा कृत्वा कश्चिदजरामरो भवति । यतः सस्यमिव मर्त्यो मनुष्यः पच्यते जीर्णो म्रियते । मृत्वा[3] च सस्यमिवाजायत आविर्भवति पुनरेवमनित्ये जीवलोके किं मृषाकरणेन । पालयात्मनः सत्यम् । प्रेषय मां यमायेत्यभिप्रायः ॥ ६ ॥

[ प्रकाशिका ] किं वा पूर्णकामस्य मृत्योर्मादृशेन बालिशेन किं प्रयोजनं स्याद्येन ऋत्विग्भ्य इव तस्मै मदर्पणं सफलं स्यात् । अत एतदेवानुशोचामीति भावः॥ ५ ॥
साध्वसरोषावेशहीनमीदृशं पुत्रवाक्यं श्रुत्वा क्रोधावेशान्मया मृत्यवे त्वा ददामीत्युक्तं नेदृशं पुत्रं मृत्यवे दातुमुत्सह इति पश्चात्तप्तहृदयं पितरमालोक्योवाच । पूर्वे पितामहादयो यथा मृषावादं विनैव स्थिता यथा चापरे साधवोऽद्यापि तिष्ठन्ति तान्वीक्ष्य तथा वर्तितव्यमिति भावः। मर्त्यः सस्यमिवाल्पेनापि कालेन जीर्यति जीर्णश्च मृत्वा सस्यमिव पुनराजायते। एवमनित्ये जीवलोके किं मृषाकरणेन । पालय सत्यं प्रेषय मां मृत्यव इति भावः ॥ ६ ॥

---

१ पुत्राणां वेत्यस्मात्परं शिष्यादीनामिति पाठः। २ वर्तमानमित्यस्मात्परं भविष्यदिति पाठः । ३ मृत्वा चेत्यस्मात्परं तत एवेति पाठः ।

**तस्यैताँ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥**
**आशाप्रतीक्षे संगतँ सूनृतां चेष्टापूर्ते पुत्रपशूँश्च सर्वान् ।**
**एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति**
**ब्राह्मणो गृहे ॥ ८ ॥**

[ शांकरभाष्यम् ] स एवमुक्तः पितात्मनः सत्यतायै प्रेषयामास । स च यमभवनं गत्वा तिस्रो रात्रीरुवास यमे प्रोषिते । प्रोष्यागतं यमममात्या भार्या वा ऊचुर्बोधयन्तो वैश्वानरोऽग्निरेव साक्षात्प्रविशत्यतिथिः सन्ब्राह्मणो गृहान्दहन्निव तस्य दाहं शमयन्त इवाग्नेरेतां पाद्यासनादिदानलक्षणां शान्तिं कुर्वन्ति सन्तोऽतिथेर्यतोऽतो हराहर हे वैवस्वतोदकं नचिकेतसे पाद्यार्थम् । यतश्चाकरणे प्रत्यवायः श्रूयते ॥ ७ ॥

आशाप्रतीक्षे अनिर्ज्ञातप्राप्येष्टार्थप्रार्थनाशा, निर्ज्ञातप्राप्यार्थप्रतीक्षणं प्रतीक्षा ते आशाप्रतीक्षे । संगतं तत्संयोगजं फलं सूनृतां च सूनृता हि प्रिया वाक्तन्निमित्तं च । इष्टापूर्ते इष्टं यागजं[1] पूर्तमारामादिक्रियाजं फलम् । पुत्रपशूंश्च पुत्रांश्च पशूंश्च सर्वानेतत्सर्वं यथोक्तं वृङ्क्ते आवर्जयति विनाशयतीत्येतत् । पुरुषस्याल्पमेधसोऽल्पप्रज्ञस्य । यस्यानश्नन्नभुञ्जानो ब्राह्मणो गृहे वसति । तस्मादनुपेक्षणीयः सर्वावस्थास्वप्यतिथिरित्यर्थः ॥ ८ ॥

[ प्रकाशिका ] एवमुक्त्वा प्रेषितः प्रोषितस्य मृत्योर्द्वारि तिस्रो रात्रीरनश्नन्नुवास । ततः प्रोष्यागतं यमं द्वाःस्था वृद्धा ऊचुः । साक्षादग्निरेवातिथिर्ब्राह्मणः सन्गृहान्प्रविशति तस्याग्नेरेतां पाद्यासनादिलक्षणां शान्तिं कुर्वन्ति सन्तस्तदुपचारेण दग्धा मा भूमेति । अतो हे वैवस्वत नचिकेतसे पाद्यार्थमुदकं हराहरेत्यर्थः ॥ ७ ॥

अकरणे प्रत्यवायं च दर्शयन्ति स्म । यस्याल्पमेधसोऽल्पप्रज्ञस्य पुरुषस्य गृहेऽनश्नन्नभुञ्जानोऽतिथिर्वसति तस्याशाप्रतीक्षे कामसंकल्पौ । यद्वानुत्पन्नवस्तुविषयेच्छाशा । उत्पन्नवस्तुप्राप्तीच्छा प्रतीक्षा । संगतं सत्संगमं सूनृतां सत्यप्रियवाचम् । इष्टापूर्ते इष्टं यागादि पूर्तं खातादि पुत्रान्पशूंश्चैतदनशनरूपं पापं वृङ्क्ते वर्जयति नाशयतीत्यर्थः । वृजी वर्जने रुधादित्वाच्छ्नम् । वृजि वर्जन इत्यस्मादिदितो नुमदादित्वाच्छपो लुग्वा ॥ ८ ॥

---

१ यागजमित्यस्य स्थाने यागादिजमिति पाठः ।

**तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।**
**नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥९॥**
**शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभि मृत्यो ।**
**त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥**

[ शांकरभाष्यम् ] एवमुक्तो मृत्युरुवाच नचिकेतसमुपगम्य पूजापुरःसरम् । तिस्रो रात्रीर्यद्यस्मादवात्सीरुषितवानसि गृहे मे ममानश्नन्हे ब्रह्मन्नतिथिः सन्नमस्यो नमस्कारार्हश्च तस्मान्नमस्ते तुभ्यमस्तु भवतु । हे ब्रह्मन्स्वस्ति भद्रं मेऽस्तु तस्माद्भवतोऽनशनेन मद्गृहवासनिमित्ताद्दोषात्तत्प्राप्त्युपशमेन । यद्यपि भवदनुग्रहेण सर्वं मम स्वस्ति स्यात्तथापि त्वदधिकसंप्रसादनार्थमनशनेनोपोषितामेकैकां रात्रिं प्रति त्रीन्वरान्वृणीष्वाभिप्रेतार्थविशेषान्प्रार्थयस्व मत्तः ॥ ९ ॥

नचिकेतास्त्वाह—यदि दित्सुर्वरान् शान्तसंकल्प उपशान्तः संकल्पो यस्य मां प्रति यमं प्राप्य किंनु करिष्यति मम पुत्र इति स शान्तसंकल्पः सुमनाः प्रसन्नमनाश्च यथा स्याद्वीतमन्युर्विगतरोषश्च गौतमो मम पिता माभि मां प्रति हे मृत्यो किंच त्वत्प्रसृष्टं त्वया विनिर्मुक्तं प्रेषितं गृहं प्रति मामभिवदेत्प्रतीतो लब्धस्मृतिः स एवायं पुत्रो ममागत इत्येवं प्रत्यभिजानन्नित्यर्थः । एतत्प्रयोजनं त्रयाणां वराणां प्रथममाद्यं वरं वृणे प्रार्थयेय यत्पितुः परितोषणम् ॥ १० ॥

[ प्रकाशिका ] एवं वृद्धैरुक्तो मृत्युर्नचिकेतसमुवाच । मे गृहे यस्माद्धेतोर्हे ब्रह्मन्नमस्कारार्होऽतिथिस्त्वं तिस्रो रात्रीरभुञ्जान एवावात्सीरित्यर्थः । स्पष्टोऽर्थः । तस्माद्धेतोर्मह्यं स्वस्ति यथा स्यादित्येवमर्थं त्रीन्वरान्प्रति तानुद्दिश्य वृणीष्व प्रार्थय । तव लिप्साभावेऽपि मदनुग्रहार्थमनशनरात्रिसमसंख्याकांस्त्रीन्वरान्वृणीष्वेति भावः ॥ ९ ॥

एवं प्रार्थितो नचिकेतास्त्वाह—हे मृत्यो मत्पुत्रो यमं प्राप्य किं करिष्यतीति मद्विषयचिन्तारहितः प्रसन्नमना माभि मां प्रति मम पिता गौतमो वीतरोषश्च यथा स्यादित्यर्थः । किं च त्वया गृहाय प्रेषितं माभि मां प्रति प्रतीतो यथापूर्वं प्रीतः सन्वदेत् । यद्वाभिवदेदाशिषं प्रयुञ्ज्यात् । "अभिवदतिनाभिवादये" इति स्मृतिष्वभिवदनस्याशीर्वादे प्रयोगात् । स्पष्टोऽर्थः ॥ १० ॥

**यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।**
**सुखꣳ रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखा-**
**त्प्रमुक्तम् ॥ ११ ॥**
**स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति ।**
**उभे तीर्त्वाशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥१२॥**

[शांकरभाष्यम्] मृत्युरुवाच--यथा बुद्धिस्त्वयि पुरस्तात्पूर्वमासीत्स्नेहसमन्विता पितुस्तव भविता प्रीतिसमन्वितस्तव पिता तथैव प्रतीतः प्रतीतवान्सन्नौद्दालकिः । उद्दालक एवौद्दालकिः । अरुणस्यापत्यमारुणिर्द्व्यामुष्यायणो वा मत्प्रसृष्टो मयानुज्ञातः सन्नितरा अपि रात्रीः सुखं प्रसन्नमनाः शयिता स्वप्ता वीतमन्युर्विगतमन्युश्च भविता स्यात्त्वां पुत्रं ददृशिवान्दृष्टवान्स मृत्युमुखान्मृत्युगोचरात्प्रमुक्तं सन्तम् ॥ ११ ॥

नचिकेता उवाच—स्वर्गे लोके रोगादिनिमित्तं भयं किंचन किंचिदपि नास्ति । न च तत्र त्वं मृत्यो सहसा प्रभवस्यतो जरया युक्त इह लोकवत्त्वत्तो न बिभेति[1] कुतश्चित्तत्र । किंचोभे अशनायापिपासे तीर्त्वातिक्रम्य शोकमतीत्य गच्छतीति शोकातिगः सन्मानसेन दुःखेन वर्जितो मोदते हृष्यति स्वर्गलोके दिव्ये ॥ १२ ॥

[प्रकाशिका] एवमुक्तो मृत्युः प्रत्युवाच । यथापूर्वं त्वयि हृष्टो भविता उद्दालक एवौद्दालकिः । अरुणस्यापत्यमारुणिर्ह्यामुष्यायणो वा । उद्दालकस्यापत्यमरुणस्य गोत्रापत्यमिति वार्थः । मत्प्रसृष्टो मदनुज्ञातो मदनुगृहीतः सन्मदनुग्रहादित्यर्थः । त्वयि विगतमन्युः सन्नुत्तरा अपि रात्रीः सुखं शयिता । लुट्, सुखनिद्रां प्राप्स्यतीति यावत् । दर्शितवान्दृष्टवान्सान्नित्यर्थः । क्वसन्तोऽयं शब्दो “ दृशेश्चेति वक्तव्यम् ” वा. इति क्वसोरिट्छान्दसो द्विर्वचनाभावः । मत्प्रसृष्टमिति द्वितीयान्तपाठे मत्प्रेषितं त्वामिति योजना ॥ ११ ॥

नचिकेता द्वितीयं वरं प्रार्थयते स्वर्गे लोक इत्यादिना मन्त्रद्वयेन । अत्र स्वर्गशब्दो मोक्षस्थानपरो यथा चैतत्तथोत्तरत्र वक्ष्यते । हे मृत्यो त्वं तत्र न प्रभवसि जरया युक्तः सन्न बिभेति जरातो न बिभेति तत्र वर्तमानः पुरुष इति शेषः । अशनाया बुभुक्षा । अत्रापि स्वर्गशब्दो मोक्षस्थानपरो यथा चैतत्तथोत्तरत्र वक्ष्यते ॥ १२ ॥

---

१ बिभेतीत्यस्मात्परं कश्चिदिति पाठः ।

**स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वꣳ श्रद्दधानाय मह्यम् ।**
**स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥**

**प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।**
**अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥१४॥**

[ शांकरभाष्यम् ] एवंगुणविशिष्टस्य स्वर्गलोकस्य प्राप्तिसाधनभूतमग्निं स्वर्ग्यं स त्वं मृत्युरध्येषि स्मरसि जानासीत्यर्थः । हे मृत्यो यतस्त्वं प्रब्रूहि कथय श्रद्दधानाय श्रद्धावते मह्यं स्वर्गार्थिने। येनाग्निना चितेन स्वर्गलोकाः स्वर्गो लोको येषां ते स्वर्गलोका यजमाना अमृतत्वममरणतां देवत्वं भजन्ते प्राप्नुवन्ति तदेतदग्निविज्ञानं द्वितीयेन वरेण वृणे ॥ १३॥

मृत्योः प्रतिज्ञेयम् । प्र ते तुभ्यं प्रब्रवीमि । यत्त्वया प्रार्थितं तदु मे मम वचसो निबोध बुध्यस्वैकाग्रमनाः सन्स्वर्ग्यं स्वर्गाय हितं स्वर्गसाधनमग्निं हे नचिकेतः प्रजानन्विज्ञातवानहं सन्नित्यर्थः । प्रब्रवीमि तन्निबोधेति च शिष्यबुद्धिसमाधानार्थं वचनम्। अधुनाग्निं स्तौति—अनन्तलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमित्येतत् । अथो अपि प्रतिष्ठामाश्रयं जगतो विराड्रूपेण तमेतमग्निं मयोच्यमानं विद्धि जानीहि त्वं निहितं स्थितं गुहायां विदुषां बुद्धौ निविष्टमित्यर्थः ॥ १४ ॥

[प्रकाशिका] स त्वमिति । पुराणादिप्रसिद्धसर्वज्ञस्त्वं स्वर्गप्रयोजनकमग्निं जानासि ।"स्वर्गादिभ्यो यद्वक्तव्यः" वा. इति प्रयोजनमित्यर्थे यत् । स्थण्डिलरूपाग्नेः स्वर्गप्रयोजनकत्वं चोपासनाद्वारेत्युत्तरत्र स्फुटम् । श्रद्दधानाय मोक्षश्रद्धावते । स्वर्गलोकेन तव किं सिध्यतीत्यत्राह स्वर्गो लोको येषां ते परं पदं प्राप्ता इत्यर्थः । " परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " छा० ८।३।४ इति देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकत्वात्स्वरूपाविर्भावलक्षणमोक्षशब्दितामृतत्वस्येति भावः ॥ १३ ॥

एवमुक्तो मृत्युः प्राह त्वत्प्रार्थितं ते प्रब्रवीमि । "व्यवहिताश्च"पा.सू. १।४।८२ इति व्यवहितः प्रयोगः। मे ममोपदेशाज्जानीहीत्यर्थः । ज्ञानस्य फलं दर्शयति । अनन्तस्य विष्णोर्लोकस्तत्प्राप्तिम् । "तद्विष्णोः परमं पदम्" क० १।३।९इत्युत्तरत्र वक्ष्यमाणत्वात् । अथो तत्प्राप्त्यनन्तरं प्रतिष्ठामपुनरावृत्तिं च लभत इति शेषः । तज्ज्ञानस्येदृशं सामर्थ्यं कथं संभवतीति मन्यमानं प्रत्याह

**लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।**
**स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ॥१५॥**
**तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः ।**
**तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥१६॥**

[शांकरभाष्यम्] इदं श्रुतेर्वचनम् । लोकादिं लोकानामादिं प्रथमशरीरित्वादग्निं तं प्रकृतं नचिकेतसा प्रार्थितमुवाचोक्तवान्मृत्युस्तस्मै नचिकेतसे । किंच या इष्टकाश्चेतव्याः स्वरूपेण । यावतीर्वा संख्यया । यथा वा चीयतेऽग्निर्येन प्रकारेण सर्वमेतदुक्तवानित्यर्थः । स चापि नचिकेतास्तन्मृत्युनोक्तं यथावत्प्रत्ययेनावदत्प्रत्युच्चारितवान् । अथ तस्य प्रत्युच्चारणेन तुष्टः सन्मृत्युः पुनरेवाह वरत्रयव्यतिरेकेणान्यं वरं दित्सुः ॥ १५ ॥

कथं तं नचिकेतसमब्रवीत्प्रीयमाणः शिष्ययोग्यतां पश्यन्प्रीयमाणः प्रीतिमनुभवन्महात्माक्षुद्रबुद्धिर्वरं तव चतुर्थमिह प्रीतिनिमित्तमद्येदानीं ददामि भूयः पुनः प्रयच्छामि । तवैव नचिकेतसो नाम्नाभिधानेन प्रसिद्धो भविता मयोच्यमानोऽयमग्निः । किंच सृङ्कां शब्दवतीं रत्नमयीं मालामिमामनेकरूपां विचित्रां गृहाण स्वीकुरु । यद्वा सृङ्कामकुत्सितां गतिं कर्ममयीं

[प्रकाशिका] विद्धि त्वमेतं निहितं गुहायाम् । ब्रह्मोपासनाङ्गतयैतज्ज्ञानस्य मोक्षहेतुत्वलक्षणमेतत्स्वरूपं गुहायां निहितमन्ये न जानन्ति त्वं जानीहीति भावः । यद्वा ज्ञानार्थस्य विदेर्लाभार्थकत्वसंभवादग्निं प्रजानंस्त्वमनन्तलोकाप्तिं प्रतिष्ठां लभस्वेत्युक्ते हेतुहेतुमद्भावः सिद्धो भवति । प्रजानन् "लक्षणहेत्वोः" पा. सू. ३।२।१२६ इति शतृप्रत्ययः ॥ १४ ॥

अनन्तरं श्रुतिवाक्यम् । लोकस्यादिं हेतुं स्वर्ग्यमिति यावत् । तमग्निमुवाच । यल्लक्षणा इष्टकाश्चेतव्या यत्संख्याका येन प्रकारेण चेतव्यास्तत्सर्वमुक्तवानित्यर्थः । यावतीरिति पूर्वसवर्णश्छान्दसः । स च नचिकेतास्तच्छ्रुतं सर्वं तथैवानूदितवानित्यर्थः । शिष्यस्य ग्रहणसामर्थ्यदर्शनेन संतुष्टः सन्मृत्युः पुनरप्युक्तवान् ॥१५॥

संतुष्यन्महामना मृत्युर्नचिकेतसमब्रवीत् पुनश्चतुर्थं वरं प्रयच्छामीति । किं तत्राह मयोच्यमानोऽग्निस्तवैव नाम्ना नाचिकेत इति प्रसिद्धो भविता । किंच विचित्रां सृङ्कां शब्दवतीं रत्नमालां स्वीकुर्वित्यर्थः ॥ १६ ॥

पुनरपि कर्म स्तौति । त्रिणाचिकेतः "अयं वाव यः पवते" इत्याद्यनुवा-

**त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू ।**
**ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥**
**त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चिनुते नाचिकेतम् ।**

[ शांकरभाष्यम् ] गृहाण । अन्यदपि कर्मविज्ञानमनेकफलहेतुत्वात्स्वीकुर्वित्यर्थः ॥ १६ ॥

पुनरपि कर्मस्तुतिमेवाह त्रिणाचिकेतस्त्रिःकृत्वो नाचिकेतोऽग्निश्चितो येन स त्रिणाचिकेतस्तद्विज्ञानस्तदध्ययनस्तदनुष्ठानवान्वा त्रिभिर्मातृपित्राचार्यैरेत्य प्राप्य संधिं संधानं संबन्धं मात्राद्यनुशासनं यथावत्प्राप्येत्येतत् । तद्धि प्रामाण्यकारणं श्रुत्यन्तरादवगम्यते । यथा मातृमान्पितृमानित्यादेः । वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा । तेभ्यो हि विशुद्धिः प्रत्यक्षा त्रिकर्मकृदिज्याध्ययनदानानां कर्ता तरत्यतिक्रामति जन्ममृत्यू । किंच ब्रह्मजज्ञं ब्रह्मणो हिरण्यगर्भाज्जातो ब्रह्मजः । ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञः सर्वज्ञो ह्यसौ । तं देवं द्योतनाज्ज्ञानादिगुणवन्तमीड्यं स्तुत्यं विदित्वा शास्त्रतो निचाय्य दृष्ट्वा चात्मभावेनेमां स्वबुद्धिप्रत्यक्षां शान्तिमुपरतिमत्यन्तमेत्यतिशयेनैति । वैराजं पदं ज्ञानकर्मसमुच्चयानुष्ठानेन प्राप्नोतीत्यर्थः ॥ १७॥

इदानीमग्निविज्ञानचयनफलमुपसंहरति प्रकरणं च त्रिणाचिकेतस्त्रयं यथोक्तं या इष्टका यावतीर्वा यथा वेत्येतद्विदित्वावगम्य यश्चैवमात्मरूपेणाग्निं

[ प्रकाशिका ] कत्रयाध्यायी त्रिकर्मकृद्यजनाध्ययनदानकृत्पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा त्रिभिरग्निभिस्त्रिभिरनुष्ठितैरग्निभिः संधिं परमात्मोपासनेन संबन्धमेत्य प्राप्य जन्ममृत्यू तरतीत्यर्थः । " करोति तद्येन पुनर्न जायते" इत्यनेनैकार्थ्यात् । एवमेव ह्ययं मन्त्रः " त्रयाणामेव चैवम्" ब्र० सू० १।४।६ इति सूत्रे व्यासार्यैर्विवृतः । त्रिभिरेत्य संधिमिति निर्दिष्टमङ्गभूतं परमात्मोपासनमाहात्म्यं मन्त्रखण्डः " विशेषणाच्च " ब्र० सू० १।२।१२ इति सूत्रभाष्ये ब्रह्मजज्ञो जीवो ब्रह्मणो जातत्वाज्ज्ञत्वाच्च तं देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थ इति विवृतः । देवशब्दस्य परमात्मवाचितया जीवपरयोश्चैक्यासंभवादत्रत्यदेवशब्दस्य परमात्मत्वपर्यन्तार्थ इति भाष्याभिप्रायः । निचाय्य ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्येमां त्रिकर्मकृत्तरतीति पूर्वमन्त्रनिर्दिष्टां संसाररूपानर्थशान्तिमेतीत्यर्थः । १७।

त्रिणाचिकेत उक्तार्थः । त्रयमेतद्विदित्वा ब्रह्मजज्ञं देवमीड्यमिति

**स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१८॥**
**एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।**
**एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व॥**

[शांकरभाष्यम्] विद्वांश्चिनुते निर्वर्तयति नाचिकेतमग्निं क्रतुं स मृत्युपाशानधर्माज्ञानरागद्वेषादिलक्षणान्पुरतोऽग्रतः पूर्वमेव शरीरपातादित्यर्थः । प्रणोद्यापहाय शोकातिगो मानसैर्दुःखैर्वर्जित इत्येतत् । मोदते स्वर्गलोके वैराजे विराडात्मस्वरूपप्रतिपत्त्या ॥ १८ ॥

एष ते तुभ्यमग्निर्वरो हे नचिकेतः स्वर्ग्यः स्वर्गसाधनो यमग्निं वरमवृणीथाः प्रार्थितवानसि द्वितीयेन वरेण सोऽग्निर्वरो दत्त इत्युक्तोपसंहारः। किंचैतमग्निं तवैव नाम्ना प्रवक्ष्यन्ति जनासो जना इत्येतदेष वरो दत्तो मया चतुर्थस्तुष्टेन । तृतीयं वरं नचिकेतो वृणीष्व । तस्मिन्ह्यदत्त ऋणवानहमित्यभिप्रायः ॥ १९ ॥

[ प्रकाशिका ] मन्त्रनिर्दिष्टं ब्रह्मस्वरूपं तदात्मकस्वात्मस्वरूपं त्रिभिरेत्य संधिमिति निर्दिष्टमग्निस्वरूपं च विदित्वा गुरूपदेशेन शास्त्रतो वा ज्ञात्वा । एतादृशार्थतयानुसंधानपूर्वकं नाचिकेतमग्निं यश्चिनुते । स मृत्युपाशान्रागद्वेषादिलक्षणान्पुरतः शरीरपातात्पूर्वमेव प्रणोद्य तिरस्कृत्य जीवदशायामेव रागादिरहितः सन्नित्यर्थः । पूर्वमेव व्याख्यातम् ॥ १८ ॥

यो वाप्येतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम् ॥
स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायते ॥ १ ॥

य एतां चितिं ब्रह्मजज्ञात्मभूतां विदित्वा ब्रह्मात्मकस्वस्वरूपतयानुसंधाय नाचिकेतमग्निं चिनुते स एव ब्रह्मात्मकस्वात्मानुसंधानशाली सन्नपुनर्भवहेतुभूतं यद्भगवदुपासनं तदनुतिष्ठति । ततश्चाग्नौ भगवदात्मकस्वात्मत्वानुसंधानपूर्वकमेव चयनं " त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू " क. १ । १ । १६ इति पूर्वमन्त्रे भगवदुपासनद्वारा मोक्षसाधनतया निर्दिष्टं नान्यदिति भावः । अयं च मन्त्रः केषुचित्कोषेषु न दृष्टः कैश्चिदव्याकृतश्च । अथापि प्रत्ययितव्यतमैर्व्यासादिभिरेव व्याख्यातत्वान्न प्रक्षेपशङ्का कार्या ॥

उपदिष्ट इति शेषः । स्पष्टोऽर्थः । किंच जनास्तवैव नाम्नैतमग्निं प्रवक्ष्यन्ती-

[प्रकाशिका]त्यर्थः । स्पष्टोऽर्थः । न चैतत्प्रकरणगतानां स्वर्गशब्दानां मोक्षपरत्वे किं प्रमाणमिति चेदुच्यते । भगवतैव भाष्यकृता स्वर्ग्यमग्निमिति मन्त्रं प्रस्तुत्य स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोऽभिधीयते । "स्वर्गलोका अमृतत्वं भजन्ते" क. १।१।१३ इति तत्रस्थस्य जननमरणाभावश्रवणात् । "त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू" क. १।१।१६ इति च वचनात् । तृतीयवरप्रश्ने नचिकेतसा क्षयिफलानां निर्दिश्यमानतया क्षयिफलमुखेन नचिकेतसा क्षयिष्णुस्वर्गफलसाधनस्य प्रार्थ्यमानत्वानुपपत्तेः । स्वर्गशब्दस्य प्रकृष्टसुखवचनतया निरवधिकानन्दरूपमोक्षस्य स्वर्गशब्दवाच्यत्वसंभवादिति करणतस्तात्पर्यतश्च प्रतिपादितत्वान्न शङ्कावकाशः । ननु "स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं जरया बिभेति । उभे तीर्त्वाशनायापिपासे शोकातिगो मोदते स्वर्गलोके" क. १।१।१२ "स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तꣳ श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण" क. १।१।१३ इति द्वितीयवरप्रश्नमन्त्रद्वये चतुरभ्यस्तस्य स्वर्गशब्दस्य मोक्षपरत्वं किं मुख्यया वृत्त्योतामुख्यया । नाद्यः । "स्वर्गापवर्गमार्गाभ्यां" "स्वर्गापवर्गयोरेकं न स्वर्गो नापुनर्भवं" "स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्" जै. सू.।१।३।१५ इत्यादिप्रयोगेष्वपवर्गप्रतिद्वंद्विवाचितया लोकवेदप्रसिद्धस्य स्वर्गशब्दस्य मोक्षवाचित्वाभावात् ।

ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश ।
स्वर्लोकः सोऽत्र कथितो लोकसंस्थानचिन्तकैः ॥

इति पुराणवचनानुसारेण सूर्यध्रुवान्तर्वर्तिलोकविशेषस्यैव स्वर्गशब्दवाच्यतया तत्रैव लौकिकवैदिकव्यवहारदर्शनेन मोक्षस्थानस्यातथात्वात् । नाप्यमुख्ययेति द्वितीयः पक्षः । मुख्यार्थे बाधकाभावात् । किमत्र प्रश्नवाक्यगतं जरामरणराहित्यामृतत्वभाक्त्वादिकं बाधकमुत प्रतिवचनगतजरामृत्युतरणाद्युत क्षयिस्वर्गस्य सर्वकामविमुखनचिकेतःप्रार्थ्यमानत्वानुपपत्तिर्वा । नाद्यः । स्वर्गलोकवासिनां जरामरणक्षुत्पिपासाशोकादिराहित्यस्यामृतपानादमृतत्त्वप्राप्तेश्च पुराणेषु स्वर्गस्वरूपकथनप्रकरणेषु दर्शनात् । 'आभूतसंप्लवस्थानममृतत्वं हि भाष्यते' इति स्मरणात् । अत्रैव "अजीर्यताममृतानामुपेत्य" क.१।१।२८इति मृत्यावप्यमृतशब्दप्रयोगदर्शनाच्च । स्वर्गलोकवासिनामेव ब्रह्मोपासनद्वारा "ते ब्रह्मलोके तु परान्तकाले"

[प्रकाशिका] मु० ३।२।६ इति श्रुत्युक्तरीत्यामृतत्वप्राप्तेः संभवेन " स्वर्गलोका अमृतत्वं भजन्ते" क. १।१।१३ इत्यस्योपपत्तेश्चापेक्षितामृतत्वपरतया लोकवेदनिरूढौपसंहारिकामृतशब्दानुसारेण प्रक्रमस्थानन्यथासिद्धविशेष्यवाचिस्वर्गशब्दस्यान्यथानयनासंभवात् । न हि देवदत्तोऽभिरूप इत्युक्तेऽभिरूपपदस्वारस्यानुसारेण देवदत्तपदस्यात्यन्ताभिरूपयज्ञदत्तपरत्वमाश्रीयते । न द्वितीयः । त्रिणाचिकेतस्त्रिभिरिति मन्त्रस्य स्वर्गसाधनस्यैवाग्नेस्त्रिरभ्यासेन जन्ममृत्युतरणहेतुभूतब्रह्मविद्याहेतुत्वमस्तीत्येतदर्थकतया स्वर्गशब्दस्य मुख्यार्थपरत्वाबाधकत्वात् । अत एव तत्तुल्यार्थस्य " करोति तद्येन पुनर्न जायते" इत्यस्यापि न स्वर्गशब्दमुख्यार्थबाधकत्वं नापि क्षयिष्णोः स्वर्गस्य फलान्तरविमुखनचिकेतःप्रार्थ्यमानत्वानुपपत्तिरिति तृतीयः पक्षः । स्वर्गसाधनाग्निप्रश्नं प्रति ब्रुवता हितैषिणा मृत्युनाऽपृष्टेपि मोक्षस्वरूपे " अनन्तलोकाप्तिमथो प्रतिष्ठां त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू क. १।१।१७ इत्यादिनोपक्षिप्त उत्पन्ना मुमुक्षा " अन्यं वरं नचिकेतो वृणीष्व " इति प्रतिषेधेन दृढीकृता । तस्यां च दशायां क्रियमाणक्षयिष्णुफलनिन्दा प्राचीनस्वर्गप्रार्थनायाः कथं बाधिका स्यात् । किंच ' श्वोभावा मर्त्यस्य " क० १।१।२६ इत्यादौ मर्त्यभोगनिन्दाया एव दर्शनेन स्वर्गनिन्दाया अदर्शनात्स्वर्गशब्दस्य मोक्षपरत्वे तस्य ज्ञानैकसाध्यतया तत्प्रयोजनकत्वस्याग्नावभावादुपक्रमोपसंहारमध्याभ्यस्तस्वर्गशब्दपीडाप्रसङ्गाच्च । सन्तु वा प्रतिवचने बाधकान्यथाप्युपक्रमाधिकरणन्यायेन प्रथमस्य प्रश्नवाक्यस्थस्वर्गशब्दस्यैव प्रबलत्वात् । न वा ' भूयसां स्यात्सधर्मत्वम् ' जै. १२।२।७।२२ इति न्यायाद्भूयोनुग्रहार्थेऽल्पस्योपक्रमस्य बाध्यत्वमस्त्विति वाच्यम् । " मुख्यं वा " जै. १२।२।८।२३ इति सूत्र औपसंहारिकबह्वपेक्षयाऽपि मुख्यस्यैव प्राबल्योक्तेः । तस्मात्स्वर्गशब्दस्य मुख्यार्थपरित्यागे न किंचित्कारणमिति । अत्रोच्यते—स्वर्गशब्दस्य मुख्ययैव वृत्त्या मोक्षवाचित्वं स्वर्गकामाधिकरणे नागृहीतविशेषणन्यायेन स्वर्गशब्दस्य प्रीतिवचनत्वमेव न प्रीतिविशिष्टद्रव्यवाचितेत्युक्तम् । ननु स्वर्गशब्दस्य नागृहीतविशेषणन्यायेन प्रीतिवचनत्वे सिद्धेऽपि देहान्तरदेशान्तरभोग्यप्रीतिवाचिता न सिध्येत् । न च यस्मिन्नोष्णमित्यादिवाक्यशेषाद्विध्युद्देशस्थस्वर्गशब्दस्य प्रीतिविशेषवाचितानिश्चय इति वाच्यम् । प्रीतिमात्रवाचित्वेन निर्णीतशक्तिकतया

[ प्रकाशिका ] संदेहाभावेन "संदिग्धेषु वाक्यशेषात्" जै. १।४।१९।२९ इति न्यायस्यानवतारादिति परिचोद्य यद्यपि लोक एव स्वर्गशब्दस्य निर्णीतार्थता तथाऽपि लोकावगतसातिशयसुखवाचकत्वे तत्साधनत्वं ज्योतिष्टोमादीनां स्यात् । तथा चाल्पधननरायाससाध्ये लौकिके तदुपायान्तरे संभवति न बहुधननराणां सुसाध्ये बह्वन्तराये ज्योतिष्टोमादौ प्रेक्षावान्प्रवर्तेत इति प्रवर्तकत्वं ज्योतिष्टोमादिविधेर्न स्यात् । अतो वाक्यशेषावगते निरतिशयप्रीतिविशेषे स्वर्गशब्दस्य शक्तौ निश्चितायां वाक्यशेषाभावस्थलेऽपि यववराहादिष्विव स एवार्थः । लौकिके सातिशयप्रीतिभरिते गुणयोगादेव वृत्तेरुपपत्तेर्न शक्त्यन्तरकल्पना । न च प्रीतिमात्रवचनस्यैव स्वर्गशब्दस्य वेदे निरतिशयप्रीतिवाचित्वमस्त्विति वाच्यम् । निरतिशयत्वांशस्यान्यतोऽनवगतत्त्वेन तत्रापि शक्त्यवश्यंभावेन स्वर्गशब्दस्य लोकवेदयोरनेकार्थता स्यात् । यदा तु वैदिकप्रयोगावगतनिरतिशयप्रीतिवाचिता तदा सातिशये लौकिके प्रीतित्वसामान्ययोगाद्गौणी वृत्तिरिति मीमांसकैर्निरतिशयसुखवाचित्वस्यैव समर्थिततया मोक्षस्य स्वर्गशब्दवाच्यत्वे विवादायोगात् । पार्थशब्दस्यार्जुन इव तदितरपृथापुत्रेषु प्रचुरप्रयोगाभावेऽपि पार्थशब्दमुख्यार्थत्वानपायवत्स्वर्गशब्दस्य सूर्यध्रुवान्तरवर्तिलोकगतसुखविशेष इवान्यत्र प्रचुरप्रयोगाभावेऽपि वाच्यतानपायात् । बर्हिराज्यादिशब्दानामसंस्कृततृणघृतादिष्वार्यैरप्रयुज्यमानानामप्यस्त्येव तद्वाचित्वं केषांचिदप्रयोगमात्रस्य शक्त्यभावासाधकत्वात् । अतस्तृणत्वादिजातिवचना एव बर्हिरादिशब्दा इति बर्हिराज्याधिकरणे स्थितत्वात् । तदुक्तं वार्तिके—–

एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः ।
तदत्यागान्न तस्यास्ति निमित्तान्तरगामिता ॥ इति ।

ततश्च स्वर्गशब्दो मोक्षसाधारण एव । ननु बर्हिराज्यादिशब्देष्वसंस्कृततृणघृतादावार्यप्रयोगाभावेऽप्यनार्यप्रयोगसत्त्वादसंस्कृतवाचितास्तु नाम । स्वर्गशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकसुखविशेषातिरिक्तस्थले नियमेनाप्रयोगात्तद्व्यावृत्त्यैव शक्तिरभ्युपगन्तव्या । अत एव प्रोद्गात्रधिकरण उद्गातृशब्दस्य ऋत्विग्विशेष इतरव्यावृत्तप्रयोगविशेषेण रूढत्वात्तस्य चोद्गातुरेकत्वेन 'प्रैतु होतुश्चमसः प्रोद्गातॄणाम्' इति बहुवचनार्थबहुत्वासंभवात्तदन्वयार्थं रूढिपूर्वकलक्षणया 'अवसुब्रह्मण्यनामकस्तोत्रसंबंधिनां त्रयाणां वा सुब्रह्मण्यानां चतुर्णां

[प्रकाशिका] वोद्गात्रादीनां छन्दोगानां ग्रहणमित्येतद्विरुध्येत। तथाऽहीनाधिकरणे तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येत्यत्राहीनशब्दस्य "अह्नः खः क्रतौ" का. वा. इति व्याकरणस्मृत्या खप्रत्ययान्ततयाऽहर्गणसामान्यवाचितया व्युत्पादितस्याप्यहीनशब्दस्य नियमेन सत्रेऽप्रयोगादहर्गणविशेषरूढिमङ्गीकृत्य ज्योतिष्टोमस्याहर्गणविशेषत्वाभावादहीन इति योगस्य रूढिपराहतत्वेन योगेन ज्योतिष्टोमे वृत्त्यसंभवाज्ज्योतिष्टोमप्रकरणाधीताया अपि द्वादशाहीनस्येति द्वादशोपसत्ताया अहर्गणविशेषोत्कर्ष इत्युक्तम्। तथा " पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु " पा. सू. ३।१।१२९ इति व्याकरणस्मृत्या सामिधेनीमात्रवाचितया व्युत्पादितस्यापि धाय्याशब्दस्य न सामिधेनीवचनत्वं नापि धीयमानत्वरूपयोगार्थवशेन वा धीयमानमात्रवचनत्वम्। स्तुतिशस्त्रार्थतया धीयमानासु ऋक्षु सामिधेनीमात्रे च धाय्याशब्दप्रयोगादपि तु " पृथुपाजवत्यौ धाय्ये भवतः " इत्यादिवैदिकप्रयोगविषयेषु पृथुपाजवत्यादिष्वेव धाय्याशब्दस्य शक्तिरिति "समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युः' जै. ९।३।३।४ इति पाञ्चमिकाधिकरणे स्थितमेवमादिकं सर्वं विरुध्येत। स्वर्गशब्दे त्वदुक्तरीत्या प्रयोगाभावेऽपि शक्तिसंभव उद्गात्रादिशब्दानामृत्विग्विशेषादिषु रूढेरकल्पनीयत्वादिति चेत्। सत्यम्। यदि सर्वात्मना तदतिरिक्ते स्वर्गशब्दप्रयोगो न स्यात्तदा तद्व्यावृत्ता रूढिरभ्युपगन्तव्या स्यात्। अस्ति हि तत्रापि प्रयोगः। " तस्य हिरण्मयः कोशः स्वर्गो लोको ज्योतिषावृत्तः, यो वैतां ब्रह्मणो वेद " " तेन धीरा अपि यन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ता " बृ० ४।४।८ " अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति के० ३४ इति तैत्तिरीयकबृहदारण्यकतलवकारादिष्वध्यात्मशास्त्रेषु प्रयोगदर्शनात् पौराणिकपरिकल्पितस्वर्गशब्दरूढेः, सांख्यपरिकल्पिताव्यक्तशब्दरूढिवदनादरणियत्वात्, अस्मिन्नेव प्रकरणे " त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चिनुते नाचिकेतम्। स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके " क० १।१।१८ इति मन्त्रे कर्मज्ञानसमुच्चयसाध्यवाचकतया श्रूयमाणस्य स्वर्गलोकशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकव्यतिरिक्तवैराजपदवाचकतया परैरपि व्याख्यातत्वाच्च। ननु सूर्यलोकोर्ध्ववर्तिलोकत्वस्यैव प्रवृत्तिनिमित्ततया तस्य च वैराजपदेऽपि सत्त्वान्नामुख्यार्थत्वमिति चेत्तर्हि भगवल्लोकेऽप्यू-

[ प्रकाशिका ] ध्वर्वर्तित्वाविशेषेण मुख्यार्थत्वानपायात् । स्वर्गापवर्गमार्गाभ्यामित्यादिव्यवहारस्य ब्राह्मणपरिव्राजकन्यायेनोपपत्तेश्च । अस्तु वाऽमुख्यार्थत्वं मुख्यार्थे बाधकसत्त्वात् । किमत्र बाधकमिति चेच्छ्रूयतामवधानेन। "स्वर्गे लोके न भयं किंचनास्ति" इति प्रथमे प्रश्नमन्त्रे न भयं किंचनास्तीत्यपहतपाप्मत्वं प्रतिपाद्यते । स्वर्गेऽपि पातभीतस्येत्युक्तरीत्या केन पापेन कदा पतिष्यामीति भीत्यभावः प्रतिपाद्यते स ह्यपहतपाप्मन एव संभवति । "न तत्र त्वं जरया बिभेति" इत्यनेन विजरत्वविमृत्युत्वे प्रतिपाद्येते । "उभे तीर्त्वाऽशनायापिपासे" इत्यनेन विजिघत्सत्वापिपासत्वे प्रतिपाद्येते । "शोकातिगः" इति विशोकत्वम् । "मोदते स्वर्गलोके" इत्यनेन "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति ।" "तेन पितृलोकेन संपन्नो महीयते" छा० ८।२।१ इति श्रुतिसंदर्भप्रतिपाद्ये सत्यकामत्वसत्यसंकल्पत्वे प्रतिपाद्येते । ततश्चाध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिब्रह्मगुणाष्टकाविर्भावस्येह प्रतीयमानतया तस्यैवेह ग्रहणसंभवे पौराणिकस्वर्गलोकगतापेक्षिकजरामरणाद्यभावस्वीकारस्यानुचितत्वात् । अत एव सप्तमे विध्यन्ताधिकरणेऽनुपदिष्टेतिकर्तव्यताकासु सौर्यादिविकृतभावनास्वितिकर्तव्यताकाङ्क्षायां वैतानिककर्माधिकारप्रवृत्तत्रयीविहितत्वसामान्याद्वैदिक्येव दर्शपौर्णमासिकीतिकर्तव्यतोपतिष्ठते । उक्तं च शास्त्रदीपिकायाम्—

वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते ।
लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता" ॥ इति ।

न च "यद्येकं यूपं स्पृशेदेष ते वायाविति ब्रूयात्" इति विहितस्यैष ते वायाविति वचनस्य वैदिकत्वसामान्येन विहितवैदिकयूपस्पर्शनिमित्तकत्वमेव स्यात् । न चेष्टापत्तिः । "लौकिके दोषसंयोगात्" जै० ९।३।३।१९ इति नावमिकाधिकरणविरोधप्रसङ्गादिति वाच्यम् । "यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्यः" इति प्रतिषिध्य यद्येकं यूपं स्पृशेदेष ते वायाविति ब्रूयादित्यनन्तरमेव विहितस्य प्रतिषिद्धप्रायश्चित्तसाकाङ्क्षलौकिकस्पर्शविषयत्वावश्यंभावेन वैदिकविषयत्वासंभवेऽप्यसति बाधके वैदिकविषयत्वस्य युक्तत्वात् । अत एव "यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति विहितेष्टिर्वैदिक एवाश्वदाने । न तु "न केसरिणो ददाति" इति निषिद्धे प्रायश्चित्तसापेक्षे सुहृदादिभ्यः स्नेहादिना

**येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।**
**एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥ २० ॥**

[ शांकरभाष्यम् ] एतावद्धृयतिक्रान्तेन विधिप्रतिषेधार्थेन मन्त्रब्राह्मणेनावगन्तव्यं यद्वरद्वयसूचितं वस्तु नात्मतत्त्वविषययाथात्म्यविज्ञानम् । अतो विधिप्रतिषेधार्थविषयस्यात्मनि क्रियाकारकफलाध्यारोपणलक्षणस्य स्वाभाविकस्याज्ञानस्य संसारबीजस्य निवृत्त्यर्थं तद्विपरीतब्रह्मात्मैकत्वविज्ञानं क्रियाकारकफलाध्यारोपणलक्षणशून्यमात्यन्तिकनिःश्रेयसप्रयोजनं वक्तव्यमित्यु-

[प्रकाशिका] क्रियमाण इति निर्णीतं तृतीये । तथा ' योगिनः प्रति स्मर्येते स्मार्ते चैते ' ब्र० सू० ४।२।२१ इति सूत्रे स्मार्तस्य वेदान्तेन प्रत्यभिज्ञानमित्युक्तं परैः । ततश्च " स्वर्गे लोके " इति मन्त्रेऽध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिब्रह्मगुणाष्टकस्यैव ग्रहणमुचितम् । " स्वर्गलोका अमृतत्वं भजन्ते " इति तृतीयप्रश्नमन्त्रेऽमृतत्वभाक्त्वश्रवणादमृतत्वशब्दस्याध्यात्मशास्त्रे मोक्ष एव प्रयोगात् । अजीर्यताममृतानामित्यत्रामृतशब्दस्यापि मुक्तपरत्वेनापेक्षिकामृतत्वपरत्वाभावात् । उत्तरत्र " ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् " क० १।२।१० " अभयं तितीर्षतां पारं नाचिकेत ँ शकेमहि " क० १।३।२ इति परस्यैव ब्रह्मणो नाचिकेताग्निप्राप्यत्वकथनेन स्वर्गशब्दस्य प्रसिद्धस्वर्गपरत्वासंभवात् । " नान्यं तस्मान्नाचिकेता वृणीते " क० १।१।२९ इति ब्रह्मेतरविमुखतया प्रतिपादितस्य नचिकेतसः क्षयिष्णुस्वर्गप्रार्थनानुपपत्तेश्च " मुख्यं वा पूर्वचोदनाल्लोकवत् " जै०सू० १२।२।८।२३ इत्यत्र समसंख्याकयोः परस्परविरोध एव मुख्यस्य प्राबल्यम् । न ह्यल्पवैगुण्ये संभवति बहुवैगुण्यं प्रयोगवचनं क्षमते । अतो यत्र जघन्यानां भूयस्त्वं तत्र " भूयसां स्यात्सधर्मत्वम् " जै० सू० १२।२।७।२२ इति न्याय एव प्रवर्तत इत्येव मीमांसकैः सिद्धान्तितत्वात् । प्रतर्दनविद्यायाम् " एष ह्येव साधु कर्म कारयति " । ' एष लोकाधिपतिरेष लोकपालः । " " आनन्दोऽजरोऽमृतः " कौ० ३।८ इत्यौपसंहारिकपरमात्मधर्मबाहुल्येन प्रक्रमश्रुतजीवलिङ्गबाधस्य " प्राणस्तथाऽनुगमात् " ब्र० सू० १।१।२८ इत्यत्र प्रतिपादितत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः ॥ १९ ॥

नचिकेता आह ' अत्ता चराचरग्रहणात् ' ब्र० सू० १।२।९ इत्यधिकरण इमं मन्त्रं प्रस्त्युत्येत्थं हि भगवता भाष्यकृता, अत्र परमपुरु-

[ शांकरभाष्यम् ] त्तरो ग्रन्थ आरभ्यते । तमेतमर्थं द्वितीयवरप्राप्त्याप्यकृतार्थत्वं तृतीयवरगोचरमात्मज्ञानमन्तरेणेत्याख्यायिकया प्रपञ्चयति—

यतः पूर्वस्मात्कर्मगोचरात्साध्यसाधनलक्षणादनित्याद्विरक्तस्यात्मज्ञानेऽधिकार इति तन्निन्दार्थं पुत्राद्युपन्यासेन प्रलोभनं क्रियते । नचिकेता उवाच तृतीयं वरं नचिकतो वृणीष्वेत्युक्तः सन् । येयं विचिकित्सा संशयः प्रेते मृते मनुष्येऽस्तीत्येकेऽस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसंबन्ध्यात्मेत्येके नायमस्तीति चैके नायमेवंविधोऽस्तीति चैकेऽतश्चास्माकं न प्रत्यक्षेण नापि वानुमानेन निर्णयविज्ञानम् । एतद्विज्ञानाधीनो हि परः पुरुषार्थ इत्यत एतद्विद्यां विजानीयामहमनुशिष्टो ज्ञापितस्त्वया । वराणामेष वरस्तृतीयोऽवशिष्टः ॥ २० ॥

[ प्रकाशिका ] षार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते । एवं च येयं प्रेत इति न शरीरमात्रवियोगाभिप्रायम् । अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा 'न प्रेत्य संज्ञाऽस्तीति' बृ० ४।४।१२ । अयमर्थः—मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्तितत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्ताऽस्त्यात्मिका नास्त्यात्मिका येयं विचिकित्सा तदपनोदाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां जानीयामिति । तथा हि विप्रतिपद्यन्ते केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते । अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम् । परे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम् । अपरेऽपहतपाप्मानं परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजविभावस्यापोध्यपगमने तद्भावलक्षणं मोक्षमातिष्ठन्ते । त्रयन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते । तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युरिति भणितम् । तथा 'त्रयाणामेव चैवम्' ब्र० सू० १।४।६ इति सूत्रे तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टमिति भाषितम् । श्रुतप्रकाशिकायां

[प्रकाशिका] च येयमित्यादिप्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः, प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्धः । निर्विशेषतापत्तिर्मोक्षश्चेद्वाक्यार्थज्ञानस्योपायता स्यात् । उभयलिङ्गकं प्राप्यं चेत्तथात्वेनोपासनमुपायः स्यात् । अतो मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्षमिति च वर्णितम् । अतो येयं प्रेत इत्यस्य मुक्तस्वरूपप्रश्नपरत्वमेव न देहातिरिक्तपारलौकिककर्मानुष्ठानोपयोगिकर्तृभोक्त्रात्मकजीवस्वरूपमात्रपरत्वम् । अन्यथा तस्यार्थस्य दुरधिगमत्वप्रदर्शनविविधभोगवितरणप्रलोभनपरीक्षाया असंभवादिति द्रष्टव्यम् । नचिकेतसो ह्ययमभिप्रायः—हितैषिवचनादात्मा परित्यक्तचरमदेहाविर्भूतापहतपाप्मत्वादिगुणाष्टको भवतीत्युपश्रुत्य स्वर्गे लोके न भयं किंचनास्तीत्यादिना मन्त्रद्वयेन मोक्षसाधनभूताग्निमप्राक्षम् । अधुना तु वादिविप्रतिपत्त्या तद्विषये संदेहो जायते । अयं स्वर्गे लोके न भयं किंचनास्तीत्यादिना मयोपन्यस्तापहतपाप्मत्वादिविशिष्टरूप आत्मास्तीत्येके नास्तीत्यपरे । त्वयोपादिष्ट एतज्जानीयामिति । अत एव प्रतिवचने "एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयꣳ हि लब्ध्वा" क० १।२।१३ इत्येतत्प्रश्नानुगुण्यमेव दृश्यते । अतो यथोक्त एवार्थः । केचित्तु " पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ " ब्र० सू० ३।२।५ इति सूत्रे तिरोहितमिति निष्ठान्तपद उपसर्जनतया निर्दिष्टस्य तिरोधानस्य ' देहयोगाद्वा सोऽपि ब्र० सू० ३।२।६ इति तदुत्तरसूत्रे सोऽपि तिरोधानभावोऽपीति पुंलिङ्गतच्छब्देन परामर्शदर्शनात् । ' गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ' ब्र० सू० १।२।११ इत्यत्रापि प्रविष्टावित्युपसर्जनतया निर्दिष्टस्य प्रवेशस्य तद्दर्शनादिति तच्छब्देन परामर्शदर्शनात् । " सर्वनाम्नानुसंधिर्वृत्तिच्छन्नस्य " इति वामनसूत्रे कृत्तद्धितादिवृत्तिन्यग्भूतस्यापि सर्वनाम्ना परामर्शस्याङ्गीकृतत्वात् । येयं प्रेत इति निष्ठान्तप्रेतशब्द उपसर्जनतया निर्दिष्टस्यापि प्रायणशब्दितमोक्षस्य " देहयोगाद्वा सोऽपि " ब्र०सू० ३।२।६ इति वन्न्यायमस्तीति नैक इत्यत्रायंपदेन परामर्शोऽस्तु न चैवं भुक्तवत्यस्मिन्भोजनमस्ति वा न वेति वाक्यवन्मुक्तेऽस्मिन्मोक्षोऽस्ति न वेति संदेहकथनं व्याहतार्थकमिति वाच्यम् । मोक्षसामान्यमभ्युपेत्य मोक्षविशेषे संदेहस्योपपादयितुं शक्यत्वादयमित्यनेन विशेषपरामर्शसंभवात् । ननु न प्रायणशब्दस्य मोक्षवाचित्वं क्वचिद्दृष्टं शरीरवियोगवाचित्वात् । श्रुतप्रका-

**देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्मः ।**
**अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥**
**देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित्**
**शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् ।**

[ शांकरभाष्यम् ] किमयमेकान्ततो निःश्रेयससाधनात्मज्ञानार्हो न वेत्येतत्परीक्षणार्थमाह—देवैरप्यत्रैतस्मिन्वस्तुनि विचिकित्सितं संशयितं पुरा पूर्वं न हि सुज्ञेयं सुष्ठु ज्ञेयं श्रुतमपि प्राकृतैर्जनैर्यतोऽणुः सूक्ष्म एष आत्माख्यो धर्मोऽतोऽन्यमसंदिग्धफलं वरं नचिकेतो वृणीष्व मा मां मोपरोत्सीरुपरोधं मा कार्षीरधमर्णमिवोत्तमर्णः । अतिसृज विमुञ्चैनं वरं मा मां प्रति ॥२१॥

एवमुक्तो नाचिकेता आह देवैरत्राप्येतस्मिन्वस्तुनि विचिकित्सितं किलेति भवत एव नः श्रुतम् । त्वं च मृत्यो यद्यस्मान्न सुज्ञेयमात्मतत्त्वमात्थ कथयस्यतः पण्डितैरप्यवेदनीयत्वाद्वक्ता चास्य धर्मस्य त्वादृक्त्वत्तुल्योऽन्यः पण्डितश्च न लभ्योऽन्विष्यमाणोऽपि । अयं तु वरो निःश्रेयसप्राप्तिहेतुरतो नान्यो वरस्तुल्यः सदृशोऽस्त्येतस्य कश्चिदप्यनित्यफलत्वादन्यस्य सर्वस्यैवेत्याभिप्रायः ॥ २२ ॥

[ प्रकाशिका ] शिकायां शरीरवियोगवाचित्वमभ्युपेत्यैव चरमशरीरवियोगपरतया व्याख्यातत्वादिति चेदस्त्वेवम् । तथाप्ययमित्यनेन चरमशरीरवियोगपरामर्शसंभवात्तद्विषयिण्येव विकिचित्साऽस्तु । ननु तस्य निश्चितत्वात्तद्विषयिणी विचिकित्सा नोपपद्यत इति चेत्सत्यम् । अयं चरमशरीरवियोगो ब्रह्मरूपाविर्भावपूर्वभावित्वेन रूपेणास्ति न वेति विचाकित्सायाः सूपपादत्वादिति वदन्ति ॥ २० ॥

एवं मुक्तस्वरूपं पृष्टो मृत्युरुपदिश्यमानार्थस्यातिगहनतया पारं प्राप्तुमप्रभवते मध्ये पतयालवे नोपदेष्टव्यमिति मत्वाह बहुदर्शिभिरपि देवैरस्मिन्मुक्तात्मस्वरूपे विचिकित्सितं संशयितम् । आत्मतत्त्वं न सुज्ञानमिति सूक्ष्म एष धर्मः । सामान्यतो धर्म एव दुर्ज्ञानस्तत्राप्ययं दुर्ज्ञान इति भावः । स्पष्टोऽर्थः । मा मेति निषेधे । वीप्सायां द्विर्वचनम् । उपरोधं मा कार्षीः । एनं मां विसृज मुञ्च ॥ २१ ॥

एवमुक्तो नाचिकेताः प्राह—स्पष्टोऽर्थः । न सुज्ञेयमिति यदात्मस्वरूपमुक्तवान् । त्वादृक्त्वादृश इत्यर्थः । अन्यत्स्पष्टम् ॥ २२ ॥

**भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि॥२३॥**
**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च।**
**महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि २४**
**ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामा१श्छन्दतः प्रार्थयस्व।**
**इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः।**

[शांकरभाष्यम्] एवमुक्तोऽपि पुनः प्रलोभयन्नुवाच मृत्युः शतायुषः शतं वर्षाण्यायूंषि येषां ताञ्शतायुषः पुत्रपौत्रान्वृणीष्व किंच गवादिलक्षणान्बहून्पशून्। हस्तिहिरण्यं हस्ती च हिरण्यं च हस्तिहिरण्यम्। अश्वांश्च। किंच भूमेः पृथिव्या महद्विस्तीर्णमायतनमाश्रयं मण्डलं राज्यं वृणीष्व। किंच सर्वमप्येतदनर्थकं स्वयं चेदल्पायुरित्यत आह—स्वयं च जीव त्वं जीव धारय शरीरं समग्रेन्द्रियकलापं शरदो वर्षाणि यावदिच्छसि जीवितुम् ॥ २३ ॥

एतत्तुल्यमेतेन यथोपदिष्टेन सदृशमन्यमपि यदि मन्यसे वरं तमपि वृणीष्व। किंच वित्तं प्रभूतं हिरण्यरत्नादि चिरजीविकां च सह वित्तेन वृणीष्वेत्येतत्। किं बहुना महत्यां भूमौ राजा नचिकेतस्त्वमेधि भव। किंचान्यत्कामानां दिव्यानां मानुषाणां च त्वा त्वां कामभाजं कामभागिनं कामार्हं करोमि। सत्यसंकल्पो ह्यहं देवः ॥ २४ ॥

ये ये कामाः प्रार्थनीया दुर्लभाश्च मर्त्यलोके सर्वांस्तान्कामांश्छन्दत इच्छातः प्रार्थयस्व। किंचेमा दिव्या अप्सरसो रमयन्ति पुरुषानिति रामाः सह

[प्रकाशिका] एवं नचिकेतसोक्तो मृत्युर्विषयस्य दुरधिगमतया मध्ये नङ्क्ष्यतीति निश्चित्य सत्यपि ग्रहणसामर्थ्ये विषयान्तरासक्तचेतस एतादृशं मुक्तात्मतत्त्वं नोपदेशार्हमिति मत्वा मुमुक्षास्थैर्यानुवृत्त्यर्थं प्रलोभयन्नुवाच—शतायुषः पुत्रपौत्रान्वृणीष्व बहूनपशून्हस्तिहिरण्यमश्वान्। स्पष्टोऽर्थः। पृथिव्या विस्तीर्णमायतनं मण्डलं राज्यं वृणीष्व। अथ वा भूमेः संबन्धि महदायतनं विचित्रशालाप्रासादादियुक्तं गृहं वृणीष्व। यावद्वर्षाणि जीवितुमिच्छसि तावज्जीवेत्यर्थः ॥ २३ ॥

उक्तेन वरेण सदृशमन्यमपि वरं मन्यसे चेत्तदपि वृणीष्व प्रभूतं हिरण्यरत्नादिकं चिरं जीवनं चेत्यर्थः। एधि भव राजेति शेषः। अस्तेर्लोण्मध्यमपुरुषैकवचनम्। कामानां कामनाविषयं करोमीत्यर्थः ॥ २४ ॥

छन्दतो यथेच्छमित्यर्थः। रथवादित्रसहिता मया दीयमानाः स्त्रियो मनुष्याणां दुर्लभा इत्यर्थः। आभिर्मया दत्ताभिः परिचारिकाभिः पादसं-

**आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः २५**
**श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः ।**
**अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥ २६ ॥**
**न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।**

[ शांकरभाष्यम् ] रथैर्वर्तन्त इति सरथाः। सतूर्याः सवादित्रास्ताश्च न हि लम्भनीयाः प्रापणीया ईदृशा एवंविधा मनुष्यैर्मर्त्यैरस्मदादिप्रसादमन्तरेण । आभिर्मत्प्रत्ताभिर्मया दत्ताभिः परिचारिणीभिः परिचारयस्वात्मानं पादप्रक्षालनादिशुश्रूषां कारयात्मन इत्यर्थः । नचिकेतो मरणं मरणसंबद्धं प्रश्नं प्रेतेऽस्ति नास्तीति काकदन्तपरीक्षारूपं मानुप्राक्षीर्मैवं प्रष्टुमर्हसि ॥ २५ ॥

एवं प्रलोभ्यमानोऽपि नचिकेता महाह्रदवदक्षोभ्य आह श्वो भविष्यन्ति न भविष्यन्ति वेति संदिह्यमान एव येषां भावो भवनं त्वयोपन्यस्तानां भोगानां ते श्वोभावाः । किंच मर्त्यस्य मनुष्यस्यान्तक हे मृत्यो यदेतत्सर्वेन्द्रियाणां तेजस्तज्जरयन्त्यपक्षयन्त्यप्सरःप्रभृतयो भोगा अनर्थायैवैते । धर्मवीर्यप्रज्ञातेजोयशःप्रभृतीनां क्षपयितृत्वात् । यां चापि दीर्घजीविकां त्वं दित्ससि तत्रापि शृणु । सर्वं यद्ब्रह्मणोऽपि जीवितमायुरल्पमेव किमुतास्मदादिदीर्घजीविका । अतस्तवैव तिष्ठन्तु वाहा रथादयस्तथा नृत्यगीते च॥२६॥

किंच न प्रभूतेन वित्तेन तर्पणीयो मनुष्यः । न हि लोके वित्तलाभः कस्यचित्तृप्तिकरो दृष्टः । यदि नामास्माकं वित्ततृष्णा स्याल्लप्स्यामहे प्राप्स्यामह इत्येतद्वित्तमद्राक्ष्म दृष्टवन्तो वयं चेत्त्वा त्वाम् । जीवितमपि

[प्रकाशिका] वाहनादिशुश्रूषां कारयेत्यर्थः । मरणमनु मरणान्मुक्तेः पश्चान्मुक्तात्मस्वरूपमिति यावत् । मरणशब्दस्य देहवियोगसामान्यवाचिनोऽपि प्रकरणवशेन विशेषवाचित्वं न दोषायेति द्रष्टव्यम् ॥ २५ ॥

एवं प्रलोभ्यमानोऽपि नचिकेता अक्षुभितहृदय आह—हे अन्तक त्वदुपन्यस्ता ये मर्त्यस्य कामास्ते श्वोभावाः श्व अभावो येषां ते तथोक्ता दिनद्वयस्थायिनो न भवन्तीत्यर्थः । सर्वेन्द्रियाणां यदेतत्तेजस्तत्क्षपयन्ति । अप्सरःप्रभृतिभोगा हि सर्वेन्द्रियदौर्बल्यावहा इति भावः । ब्रह्मणोऽपि जीवितं स्वल्पं किमुतास्मदादिजीवितम् । अतश्चिरजीविकापि न वरणार्हेति भावः । वाहा रथादयस्तिष्ठन्त्विति शेषः ॥ २६ ॥

न हि वित्तेन लब्धेन कस्यचित्तृप्तिर्दृष्टचरी । “ न जातु कामः कामानामुपभोगेन शाम्यति ” म. भा. ययातेराख्याने । इति न्यायादिति भावः ।

**जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥**
**अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् ।**
**अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥**
**यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि नस्तत्**

[ शांकरभाष्यम् ] तस्यैव जीविष्यामो यावद्याम्ये पदे त्वमीशिष्यसीशिष्यसे प्रभुः स्याः । कथं हि मर्त्यस्त्वया समेत्याल्पधनायुर्भवेत् । वरस्तु मे वरणीयः स एव यदात्मविज्ञानम् ॥ २७ ॥

यतश्चाजीर्यतां वयोहानिमप्राप्नुवताममृतानां सकाशमुपेत्योपगम्यात्मन उत्कृष्टं प्रयोजनान्तरं प्राप्तव्यं तेभ्यः प्रजानन्नुपलभमानः स्वयं तु जीर्यन्मर्त्यो जरामरणवान्क्वधःस्थः कुः पृथिव्यधश्चान्तरिक्षादिलोकापेक्षया तस्यां तिष्ठतीति क्वधःस्थः सन्कथमेवमविवेकिभिः प्रार्थनीयं पुत्रवित्तहिरण्याद्यस्थिरं वृणीते । क्व तदास्थ इति वा पाठान्तरम् । अस्मिन्पक्षे चाक्षरयोजना । तेषु पुत्रादिष्वास्थाऽऽस्थितिस्तात्पर्येण वर्तनं यस्य स तदास्थस्ततोऽधिकतरं पुरुषार्थं दुष्प्रापमपि प्रापिपयिषुः क्व तदास्थो भवेन्न कश्चित्तदसारज्ञस्तदर्थी स्यादित्यर्थः । सर्वो ह्युपर्युपर्येव बुभूषति लोकस्तस्मान्न पुत्रवित्तादिलोभैः प्रलोभ्योऽहम् । किंचाप्सरःप्रमुखान्वर्णरतिप्रमोदाननवस्थितरूपतयाभिध्यायन्निरूपयन्यथावदतिदीर्घे जीविते को विवेकी रमेत ॥ २८ ॥

[ प्रकाशिका] किंच—त्वां वयं दृष्टवन्तश्चेद्वित्तं प्राप्स्यामहे। त्वद्दर्शनमस्ति चेद्वित्तलाभे को भार इति भावः । तर्हि चिरजीविका प्रार्थनीयेत्यत आह—यावत्कालं याम्ये पदे त्वमीश्वरतया वर्तसे । व्यत्ययेन परस्मैपदम् । तावत्पर्यन्तमस्माकमपि जीवनं सिद्धमेव । न हि त्वदाज्ञातिलङ्घनेनास्मज्जीवितान्तकरः कश्चिदस्ति । वरलाभालाभयोरपि तावदेव जीवनमिति भावः । अतो येयं प्रेत इति प्राक्प्रस्तुतो वर एव वरणीय इति भावः ॥ २७ ॥

जरामरणशून्यानां मुक्तानां स्वरूपं ज्ञात्वा । प्रजानन्विवेकी जरामरणोपप्लुतोऽयं जनस्तदास्थो जरामरणाद्युपप्लुताप्सरःप्रभृतिविषयविषयकास्थावान्क्व कथं भवेदित्यर्थः । तत्रत्यान्वर्णरतिप्रमोदान् । वर्णा आदित्यवर्णत्वादिरूपविशेषाः । रतिप्रमोदा ब्रह्मभोगादिजनितानन्दविशेषास्तान्सर्वानभिध्यायन्निपुणतया निरूपयन् । अत्यल्प ऐहिके जीविते कः प्रीतिमान्स्यादित्यर्थः ॥ २८ ॥

महति पारलौकिके यस्मिन्मुक्तात्मस्वरूपे संशेरते तदेव मे ब्रूहि ।

**योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥२९॥**
**काठकोपनिषदि प्रथमाध्याये प्रथमा वल्ली समाप्ता ।**
**अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳ सिनीतः ।**
**तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥**

[ शांकरभाष्यम् ] अतो विहायानित्यैः कामैः प्रलोभनं यन्मया प्रार्थितं यस्मिन् प्रेत इदं विचिकित्सनं विचिकित्सन्त्यस्ति नास्तीत्येवंप्रकारं हे मृत्यो सांपराये परलोकविषये महति महत्प्रयोजननिमित्त आत्मनो निर्णयविज्ञानं यत्तद्ब्रूहि कथय नोऽस्मभ्यम् । किं बहुना योऽयं प्रकृत आत्मविषयो वरो गूढं गहनं दुर्विवेचनं प्राप्तोऽनुप्रविष्टस्तस्माद्वरादन्यमविवेकिभिः प्रार्थनीयमनित्यविषयं वरं नचिकेता न वृणीते मनसापीति श्रुतेर्वचनमिति ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमदाचार्यश्रीशंकरभगवतः कृतौ काठकोपनिषद्भाष्ये
प्रथमाध्याये प्रथमवल्ली समाप्ता ॥ १ ॥

परीक्ष्य शिष्यं विद्यायोग्यतां चावगम्याह--अन्यत्पृथगेव श्रेयो निःश्रेयसं तथान्यदुताप्येव प्रेयः प्रियतरमपि ते प्रेयःश्रेयसी उभे नानार्थे भिन्नप्रयोजने सती पुरुषमधिकृतं वर्णाश्रमादिविशिष्टं सिनीतो बध्नीतस्ताभ्यामात्मकर्तव्यतया प्रयुज्यते सर्वः पुरुषः । श्रेयःप्रेयसोर्ह्यभ्युदयामृतत्वार्थी पुरुषः प्रवर्तते । अतः श्रेयःप्रेयःप्रयोजनकर्तव्यतया ताभ्यां बद्ध इत्युच्यते सर्वः पुरुषः । ते यद्यप्येकैकपुरुषार्थसंबन्धिनी विद्याविद्यारूपत्वाद्विरुद्धे इत्यन्यतरापरित्यागेनैकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयोर्हित्वाविद्यारूपं प्रेयः श्रेय एव केवलमाददानस्योपादानं कुर्वतः साधु शोभनं शिवं भवति। यस्त्वदूरदर्शी विमूढो हीयते वियुज्यतेऽस्मादर्थात्पुरुषार्थात्पारमार्थिकात्प्रयोजनान्नित्यात्प्रच्यवत इत्यर्थः । कोऽसौ य उ प्रेयो वृणीत उपादत्त इत्येतत् ॥ १ ॥

[ प्रकाशिका ] गूढमात्मतत्त्वमनुप्रविष्टो योऽयं वरस्तस्मादन्यं नचिकेता न वृणीते स्मेति श्रुतेर्वचनम् ॥ २९ ॥

इति प्रथमा वल्ली ॥ १ ॥

एवं शिष्यं परीक्ष्य तस्य मुमुक्षोः स्थैर्यं निश्चित्य तस्योपदेशयोग्यतां मन्वानो मुमुक्षां स्तौति—अतिप्रशस्तं मोक्षवर्त्माप्यन्यत् । प्रियत्वास्पदं भोगवर्त्माप्यन्यत् ते श्रेयःप्रेयसी परस्परविलक्षणप्रयोजने सती पुरुषं सिनीतो

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते२**
**स त्वं प्रियान्प्रियरूपा॑श्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।**
**नैता॑ सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः३**
**दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।**

[शांकरभाष्यम्] यद्युभे अपि कर्तुं स्वायत्ते पुरुषेण किमर्थं प्रेय एवादत्ते बाहुल्येन लोक इत्युच्यते सत्यं स्वायत्ते तथापि साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपे सती व्यामिश्रीभूते इव मनुष्यमेतं पुरुषमा इतः प्राप्नुतः श्रेयश्च प्रेयश्च। अतो हंस इवाम्भसः पयस्तौ श्रेयःप्रेयःपदार्थौ संपरीत्य सम्यक्परिगम्य मनसालोच्य गुरुलाघवं विविनक्ति पृथक्करोति धीरो धीमान् । विविच्य च श्रेयो हि श्रेय एवाभिवृणीते प्रेयसोऽभ्यर्हितत्वात् । कोऽसौ धीरः ।यस्तु मन्दोऽल्पबुद्धिः स विवेकासामर्थ्याद्योगक्षेमनिमित्तं शरीराद्युपचयरक्षणनिमित्तमित्येतत्प्रेयः पशुपुत्रादिलक्षणं वृणीते ॥ २ ॥

स त्वं पुनः पुनर्मया प्रलोभ्यमानोऽपि प्रियान्पुत्रादीन्प्रियरूपांश्चाप्सरःप्रभृतिलक्षणान्कामानभिध्यायंश्चिन्तयंस्तेषामनित्यत्वासारत्वादिदोषान्हे नचिकेतोऽत्यस्राक्षीरतिसृष्टवान्परित्यक्तवानस्यहो बुद्धिमत्ता तव नैतामवाप्तवानसि सृङ्कां सृतिं कुत्सितां मूढजनप्रवृत्तां वित्तमयीं धनप्रायाम् । यस्यां सृतौ मज्जन्ति सीदन्ति बहवोऽनेके मूढा मनुष्याः ॥ ३ ॥

तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीत इत्युक्तं [प्रकाशिका] बध्नीतः । पुरुषं स्ववशतामापादयत इत्यर्थः । तयोर्मध्ये श्रेय आददानस्य मोक्षाय प्रयतमानस्य साधु भद्रं भवति । य उ प्रेयो वृणीते स पुरुषार्थाद्भ्रष्टो भवति । उ इत्यवधारणे ॥ १ ॥

श्रेयश्च प्रेयश्च मनुष्यं प्राप्नुतः । तौ श्रेयःप्रेयःपदार्थौ सम्यगालोच्य नीरक्षीरे हंस इव पृथक्करोति प्राज्ञः प्रेयोऽपेक्षयाऽभि अभ्यर्हितं श्रेय एव वृणीते । मन्दमतिर्योगक्षेमाद्धेतोः प्रेयो वृणीते । शरीरस्योपचयो योगः । क्षेमः परिपालनम् ॥ २ ॥

तादृशस्त्वं स्वतो रूपतश्च प्रियान्काम्यमानान्स्त्र्यादीनित्यर्थः । दुःखोदर्कत्वदुःखमिश्रत्वादिदोषयुक्ततया निरूपयंस्त्यक्तवानसीत्यर्थः । वित्तमयीं धनप्रायां सृङ्कां कुत्सितगतिं विमूढजनसेवितामेतां न प्राप्तवानसि । स्पष्टोऽर्थः ३

याविद्येति ज्ञाता कामकर्मात्मिका या च विद्येति ज्ञाता वैराग्यतत्त्व-

**विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ४**
**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।**
**दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ५**
**न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।**

[ शांकरभाष्यम् ] तत्कस्माद्यतो दूरं दूरेण महतान्तरेणैते विपरीते अन्योन्यव्यावृत्तरूपे विवेकाविवेकात्मकत्वात्तमःप्रकाशाविव । विषूची विषूच्यौ नानागती भिन्नफले संसारमोक्षहेतुत्वेनेत्येतत् । के ते इत्युच्यते—या चाविद्या प्रेयोविषया विद्येति च श्रेयोविषया ज्ञाता निर्ज्ञातावगता पण्डितैस्तत्र विद्याभीप्सिनं विद्यार्थिनं नचिकेतसं त्वामहं मन्ये। कस्माद्यस्मादविद्वद्बुद्धिप्रलोभिनः कामा अप्सरःप्रभृतयो बहवोऽपि त्वा त्वां नालोलुपन्त न विच्छेदं कृतवन्तः श्रेयोमार्गादात्मोपभोगाभिवाञ्छासंपादनेन । अतो विद्यार्थिनं श्रेयोभाजनं मन्य इत्यभिप्रायः ॥ ४ ॥

ये तु संसारभाजोऽविद्यायामन्तरे मध्ये घनीभूत इव तमसि वर्तमाना वेष्ट्यमानाः पुत्रपश्वादितृष्णापाशशतैः स्वयं वयं धीराः प्रज्ञावन्तः पण्डिताः शास्त्रकुशलाश्चेति मन्यमानास्ते दन्द्रम्यमाणा अत्यर्थं कुटिलामनेकरूपां गतिं गच्छन्तो जरामरणरोगादिदुःखैः परियन्ति परिगच्छन्ति मूढा अविवेकिनोऽन्धेनैव दृष्टिविहीनेनैव नीयमाना विषमे पथि यथा बहवोऽन्धा महान्तमनर्थमृच्छन्ति तद्वत् ॥ ५ ॥

अत एव मूढत्वान्न सांपरायः प्रतिभाति । संपरेयत इति संपरायः

[प्रकाशिका ] ज्ञानमयी एते दूरमत्यन्तविषूच्यौ भिन्नगती परस्परविरुद्धे च । विद्याभीप्सिनं विद्यार्थिनम् । विद्याभीप्सितमिति पाठ आहिताग्नित्वान्निष्ठान्तस्य परनिपातश्छान्दसत्वाद्वा । कामा बहवोऽपि त्वां नालोलुपन्त श्रेयोमार्गाद्विच्छेदं न कृतवन्तः । विषयवशगो न भवसीत्यर्थः । “ लुपसद ” पा. सू. ३।१।२४ इति यङन्ताल्लङ् । छान्दसो यलोपः । यङ्लुगन्ताद्वा छान्दसमात्मनेपदमदभावश्च ॥ ४ ॥

अविद्या या च विद्येति ज्ञातेत्युपात्तमार्गद्वयेऽविद्यामार्गं निन्दति— काम्यकर्मादिलक्षणायामविद्यायां मध्ये घनीभूत इव तमसि वर्तमानाः । स्वयमेव प्रज्ञाशालिनः शास्त्रकुशलाश्चेति मन्यमानाश्च । जरारोगादिदुःखपीडिता अविवेकिनः परिभ्रमन्ति । स्पष्टोऽर्थः । केचित्तु दन्द्रम्यमाणा इति पाठमाश्रित्य विषयकामाग्निना द्रुतचित्ता इत्यर्थं वर्णयन्ति ॥ ५ ॥

**अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥६॥**
**श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।**
**आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः ७**

[शांकरभाष्यम्] परलोकस्तत्प्राप्तिप्रयोजनः साधनविशेषः शास्त्रीयः सांपरायः स च बालमविवेकिनं प्रति न प्रतिभाति न प्रकाशते नोपतिष्ठत इत्येतत्। प्रमाद्यन्तं प्रमादं कुर्वन्तं पुत्रपश्वादिप्रयोजनेष्वासक्तमनसं तथा वित्तमोहेन वित्तनिमित्तेनाविवेकेन मूढं तमसाच्छन्नं सन्तमयमेव लोको योऽयं दृश्यमानः स्त्र्यन्नपानादिविशिष्टो नास्ति परोऽदृष्टो लोक इत्येवं मननशीलो मानी पुनः पुनर्जनित्वा वशं मदधीनतामापद्यते मे मृत्योर्मम जननमरणादिलक्षणदुःखप्रबन्धारूढ एव भवतीत्यर्थः । प्रायेण ह्येवंविध एव लोकः ॥ ६ ॥

यस्तु श्रेयोर्थी सहस्रेषु कश्चिदेवात्मविद्भवति त्वद्विधो यस्माच्छ्रवणायापि श्रवणार्थं श्रोतुमपि यो न लभ्य आत्मा बहुभिरनेकैः शृण्वन्तोऽपि बहवोऽनेकेऽन्ये यमात्मानं न विद्युर्न विदन्त्यभागिनोऽसंस्कृतात्मानो न विजानीयुः । किंचास्य वक्ताप्याश्चर्योऽद्भुतवदेवानकेषु कश्चिदेव भवति। तथा श्रुत्वाप्यस्यात्मनः कुशलो निपुण एवानेकेषु लब्धा कश्चिदेव भवति । यस्मादाश्चर्यो ज्ञाता कश्चिदेव कुशलानुशिष्टः कुशलेन निपुणेनाचार्येणानुशिष्टः सन् ७

[प्रकाशिका] परलोकोऽविवेकिनं प्रति न प्रकाशते। अनवहितमनस्कं विषयाशावशीकृतमनोरथम् । अयमेव लोकोऽस्ति परलोको नास्तीति मन्यमानः । मत्क्रियमाणयातनाविषयो भवतीत्यर्थः । व्यासार्यैः "संयमने त्वनुभूय" ब्र० सू० ३।१।१३ इति सूत्रेऽयं लोको नास्ति पर उत मानीति पाठानुसारेणायं च लोकः परश्च लोको नास्तीत्यर्थो वर्णितस्तत्र पक्षे तस्येति शेषः पूरणीयः । चशब्दोऽध्याहार्यः । मानीत्यस्य दुर्मानीत्यर्थः। शिष्टपरिग्रहाभावादयं लोको नास्तीत्यस्योपपत्तिर्द्रष्टव्या । दुर्मानी पुनः पुनर्वशमापद्यत इत्युत्तरत्र संबध्यते ॥ ६ ॥

श्रवणलाभोऽपि महासुकृतफलमिति भावः । न हि श्रोतॄणां सर्वेषां परमात्मप्रतिपत्तिः सुलभेति भावः । अस्य कुशलो वक्ता कुशलः प्राप्तश्च दुर्लभ इत्यर्थः । कुशलेनाचार्येणानुशिष्टो ज्ञाताऽप्याश्चर्यः ।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः । भ. गी. ७।३

इत्युक्तेरिति भावः ॥ ७ ॥

**न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।**
**अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥८॥**
**नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।**

[शांकरभाष्यम्] कस्मात् नहि नरेण मनुष्येणावरेण प्रोक्तोऽवरेण हीनेन प्राकृतबुद्धिनेत्येतदुक्त एष आत्मा यं त्वं मां पृच्छसि । न हि सुष्ठु सम्यग्विज्ञेयो विज्ञातुं शक्यो यस्माद्बहुधास्ति नास्ति कर्ताकर्ता शुद्धोऽशुद्ध इत्याद्यनेकधा चिन्त्यमानो वादिभिः । कथं पुनः सुविज्ञेय इत्युच्यते—अनन्यप्रोक्तेऽनन्येनापृथग्दर्शिनाचार्येण प्रतिपाद्यब्रह्मात्मभूतेन प्रोक्त उक्त आत्मनि गतिरनेकधास्तिनास्तीत्यादिलक्षणा चिन्ता गतिरत्रास्मिन्नात्मनि नास्ति न विद्यते सर्वविकल्पगतिप्रत्यस्तमितत्वादात्मनः । अथवा स्वात्मभूतेऽनन्यस्मिन्नात्मनि प्रोक्तेऽनन्यप्रोक्ते गतिरत्रान्यावगतिर्नास्ति ज्ञेयस्यान्यस्याभावात् । ज्ञानस्य ह्येषा परा निष्ठा यदात्मैकत्वविज्ञानम् । अतोऽवगन्तव्याभावान्न गतिरत्रावशिष्यते। संसारगतिर्वात्र नास्त्यनन्य आत्मनि प्रोक्ते नान्तरीयकत्वात्तद्विज्ञानफलस्य मोक्षस्य । अथवा प्रोच्यमानब्रह्मात्मभूतेनाचार्येण प्रोक्त आत्मन्यगतिरनवबोधोऽपरिज्ञानमत्र नास्ति । भवत्येवावगतिस्तद्विषया श्रोतुस्तदस्म्यहमित्याचार्यस्येवेत्यर्थः । एवं सुविज्ञेय आत्मागमवताचार्येणानन्यतया प्रोक्तः । इतरथाणीयानणुप्रमाणादपि संपद्यत आत्मा । अतर्क्यमतर्क्यः स्वबुद्ध्याभ्यूहेन केवलेन तर्केण । तर्क्यमाणेऽणुपरिमाणे केनचित्स्थापित आत्मनि ततो ह्यणुतरमन्योऽभ्यूहति ततोऽप्यन्योऽणुतममिति । न हि कुतर्कस्य निष्ठा क्वचिद्विद्यते ॥ ८ ॥

अतोऽनन्यप्रोक्त आत्मन्युत्पन्ना येयमागमप्रतिपद्यात्ममतिर्नैषा तर्केण

[प्रकाशिका] अवरेणाश्रेष्ठेन प्राकृतेन पाण्डित्यमात्रप्रयोजनवेदान्तश्रवणेन नरेण देहात्माभिमानिनैष आत्मा सुविज्ञेयो न भवति । कुतो हेतोः । बहुधा चिंत्यमानो वादिभिरिति शेषः । अनन्येनोच्यमानादात्मनोऽनन्येन तदेकान्तिना ब्रह्मसाक्षात्कारिणा प्रोक्तेऽत्रात्मनि यादृश्यवगतिः सात्मावगतिरवरेण प्रोक्ते नास्तीत्यर्थः । यद्वात्र संसारे गतिश्चङ्क्रमणं नास्तीत्यर्थः । यद्वाऽनन्यप्रोक्ते स्वयमवगते गतिरात्मावगतिर्नास्तीत्यर्थः । अन्यप्रोक्त इति पाठेऽवरेण प्रोक्ते सत्यात्मन्यवगतिर्नास्तीत्यर्थः । ननु येन केनचिदुपदिष्टेप्यूहापोहशालिनः स्यादेवेत्यत आह—यतोऽणोरप्यणीयानात्मातस्तत्स्वरूपं तर्कागोचरम् ॥८॥

आत्मविषयिणी मतिस्तर्कप्रापणीया नेत्यर्थः । अतस्तर्ककुशलेनापि

**यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ९**
**जानाम्यहꣳ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।**
**ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्**
**कामस्याऽऽप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम् ।**

[शांकरभाष्यम्] स्वबुद्ध्यभ्यूहमात्रेणापनेया न प्रापणीयेत्यर्थः । नापनेतव्या वा न हातव्या । तार्किको ह्यनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किंचिदेव कथयति । अत एवच येयमागमप्रभूता मतिरन्येनैवागमाभिज्ञेनाचार्येणैव तार्किकात्प्रोक्ता सती सुज्ञानाय भवति हे प्रेष्ठ प्रियतम । का पुनः सा तर्कागम्या मतिरित्युच्यते । यां त्वं मतिं मद्वरप्रदानेनापः प्राप्तवानसि । सत्यावितथविषया धृतिर्यस्य तव स त्वं सत्यधृतिर्बतासीत्यनुकम्पयन्नाह मृत्युर्नचिकेतसं वक्ष्यमाणविज्ञानस्तुतये । त्वादृक्त्वत्तुल्यो नोऽस्मभ्यं भूयाद्भवताद्भवत्वन्यः पुत्रः शिष्यो वा प्रष्टा । कीदृग्यादृक्त्वं हे नचिकेतः प्रष्टा ॥ ९ ॥

पुनरपि तुष्ट आह जानाम्यहं शेवधिंर्निधिः कर्मफललक्षणो निधिरिव प्रार्थ्यत इति । असावनित्यमनित्य इति जानामि न हि यस्मादनित्यैरध्रुवैर्नित्यं ध्रुवं तत्प्राप्यते । परमात्माख्यः शेवधिः । यस्त्वनित्यसुखात्मकः शेवधिः स एवानित्यैर्द्रव्यैः प्राप्यते । हि यतस्ततस्तस्मान्मया जानतापि नित्यमनित्यसाधनैर्न प्राप्यत इति नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः पश्वादिभिः स्वर्गसुखसाधनभूतोऽग्निर्निर्वर्तित इत्यर्थः । तेनाहमधिकारापन्नो नित्यं याम्यं स्थानं स्वर्गाख्यं नित्यमापेक्षिकं प्राप्तवानस्मि ॥ १० ॥

त्वं तु कामस्याऽऽप्तिं समाप्तिम् । अत्रैवेहैव सर्वे कामाः परिसमाप्ताः ।

[प्रकाशिका] स्वयं ज्ञातुं न शक्येत्यर्थः । हे प्रेष्ठ प्रियतमान्येनैव गुरुणोपदिष्टैव मतिर्मोक्षसाधनज्ञानाय भवति । का पुनः सा मतिरित्यत्राह यां मतिं त्वमाप आप्तवानसि सिषाधयिषिततया निश्चितवानित्यर्थः । सत्यधृतिरसि । सत्याऽप्रकम्प्या धृतिर्यस्य स तथोक्तः । बतेत्यनुकम्पायाम् । त्वादृशः शिष्योऽस्माकं भूयादित्यर्थः ॥ ९ ॥

पुनरपि तुष्ट आह—शेवधिर्निधिः । कुबेराद्यैश्वर्यमेवंजातीयकं कर्मफललक्षणमनित्यमिति जानामि । आत्मतत्त्वमध्रुवैरनित्यफलसाधनभूतैरनित्यद्रव्यसाध्यैर्वा कर्मभिरित्यर्थः । एवं ज्ञातवता मया ब्रह्मप्राप्तिसाधनज्ञानोद्देशेनानित्यैरिष्टकादिद्रव्यैर्नाचिकेतोऽग्निश्चितस्तस्माद्धेतोर्नित्यफलसाधनं ज्ञानं प्राप्तवानस्मीत्यर्थः । अतो ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्य न विरोधः ॥ १० ॥

**स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः**
**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥१२॥**

[शांकरभाष्यम्] जगतः साध्यात्माधिभूताधिदैवादेः प्रतिष्ठामाश्रयं सर्वात्मकत्वात् । क्रतोः फलं हैरण्यगर्भं पदमनन्त्यमानन्त्यम् । अभयस्य च पारं परां निष्ठाम् । स्तोमं स्तुत्यं महदणिमाद्यैश्वर्याद्यनेकगुणसंहतं स्तोमं च तन्महच्च निरतिशयत्वात्स्तोममहत् । उरुगायं विस्तीर्णां गतिम् । प्रतिष्ठां स्थितिमात्मनोऽनुत्तमामपि दृष्ट्वा धृत्या धैर्येण धीरो धीमान्सन्नचिकेतोऽत्यस्राक्षीः परमेवाकांक्षन्नतिसृष्टवानसि सर्वमेतत्संसारभोगजातम् । अहो बतानुत्तमगुणोऽसि ॥ ११ ॥

यं त्वं ज्ञातुमिच्छस्यात्मानं तं दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शोऽतिसूक्ष्मत्वात् । गूढं गहनमनुप्रविष्टं प्राकृतविषयविकारविज्ञानैः प्रच्छन्नमित्येतत् । गुहाहितं गुहायां बुद्धौ स्थितं[1] तत्रोपलभ्यमानत्वात् । गह्वरेष्ठं गह्वरे विषमेऽनेकानर्थसंकटे तिष्ठतीति गह्वरेष्ठम् । यत एवं गूढमनुप्रविष्टो गुहाहितश्चातो गह्वरेष्ठः । अतो दुर्दर्शः । तं पुराणं पुरातनमध्यात्मयोगाधिगमेन विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगस्तस्याधिगमस्तेन मत्वा देवमात्मानं धीरो हर्षशोकावात्मन उत्कर्षापकर्षयोरभावाज्जहाति ॥ १२ ॥

[प्रकाशिका] त्वादृङ्नो भूयान्नचिकेतः प्रष्टेति पूर्वमन्त्रोक्तं नचिकेतसः श्रवणाधिकारं विवृणोति—क्रतोः कर्मणः प्रतिष्ठां फलभूतां जगतः कामस्याप्तिं चतुर्मुखस्थानपर्यन्तसर्वलोकसंबन्धिस्त्र्यादिविषयात्मककामप्राप्तिं च दृष्ट्वा मोक्षस्वरूपमाह—आनन्त्यमभयस्य पारमित्यादिना । अविनाशित्वमत्यन्तनिर्भयत्वमपहतपाप्मत्वसत्यसंकल्पत्वादिमहागुणगणरूपस्तोममुरुकीर्तिं च स्थैर्यं च मोक्षगतं दृष्ट्वा लौकिकान्कामान्प्रज्ञाशाली त्वं त्यक्तवानसीत्यर्थः । यद्वा मोक्षरूपपरमात्मस्वरूप एव सर्वकामावाप्तिं तत्रैव सकलजगदाधारत्वं क्रतोरनन्तफलरूपतां चेत्येवं सर्वं परमात्मविषयतया योजनीयम् ॥ ११ ॥

तृतीयं प्रश्नं प्रति वक्ति तं दुर्दर्शमित्यादिना मन्त्रद्वयेन— श्रवणायापि बहुभिर्यो न लभ्य इत्युक्तरीत्या द्रष्टुमशक्यं गूढं तिरोधायककर्मरूपाविद्यातिरोहितम् । सर्वभूतानुप्रविष्टं गुहाहितं हृदयगुहावर्तिनम् ।

---

१ स्थितमिति स्थाने स्थितमाहितं निहितमिति पाठः ।

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।**

[शांकरभाष्यम् ] दर्शितमिन्द्रियमनोबुद्धिपरत्वेन । यो हि गन्ता सोऽगतमप्रत्यग्रूपं गच्छत्यनात्मभूतं न विपर्ययेण । तथा च श्रुतिः—"अनध्वगा अध्वसु पारयिष्णवः" इत्याद्या । तथा च दर्शयति प्रत्यगात्मत्वं सर्वस्य । एष पुरुषः सर्वेषु ब्रह्मादिस्तम्बपर्यन्तेषु भूतेषु गूढः संवृतो दर्शनश्रवणादिकर्माविद्यामायाछन्नोऽत एवात्मा न प्रकाशत आत्मत्वेन कस्यचित् । अहो अतिगम्भीरा दुरवगाह्या विचित्रा माया चेयं यदयं सर्वो जन्तुः परमार्थतः परमार्थसतत्त्वोऽप्येवं बोध्यमानोऽहं परमात्मेति न गृह्णात्यनात्मानं देहेन्द्रियादिसंघातमात्मनो दृश्यमानमपि घटादिवदात्मत्वेनाहममुष्य पुत्र इत्यनुच्यमानोऽपि गृह्णाति । नूनं परस्यैव मायया मोमुह्यमानः सर्वो लोको बंभ्रमीति । तथा च स्मरणम्—" नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥ " भ. गी ७।२५ इत्यादि । ननु विरुद्धमिदमुच्यते मत्वा धीरो न शोचति न प्रकाशत इति च नैतदेवम् । असंस्कृतबुद्धेरविज्ञेयत्वान्न प्रकाशत इत्युक्तम् । दृश्यते तु संस्कृतयाग्र्ययाग्रमिवाग्र्या तयैकाग्रतयोपेतयेत्येतत्सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया । कैः । सूक्ष्मदर्शिभिरिन्द्रियेभ्यः परा ह्यर्था इत्यादिप्रकारेण सूक्ष्मतापारम्पर्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलं येषां ते सूक्ष्मदर्शिनस्तैः सूक्ष्मदर्शिभिः पण्डितैरित्येतत् ॥ १२ ॥

तत्प्रतिपत्त्युपायमाह—यच्छेन्नियच्छेदुपसंहरेत्प्राज्ञो विवेकी । किम् । वाग्वाचम् । वागत्रोपलक्षणार्था सर्वेषामिन्द्रियाणाम् । क्व । मनसी मनसीति च्छान्दसं दैर्घ्यम् । तच्च मनो यच्छेज्ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि । बुद्धिर्हि मनआदिकरणान्याप्नोतीत्यात्मा प्रत्यक्तेषाम् । ज्ञानं बुद्धिमात्मनि प्रकाशिका]रहितया सूक्ष्मार्थविवेचनशक्तया सूक्ष्मदर्शनशीलैर्दृश्यत इत्यर्थः १२

बाह्याभ्यन्तरकरणव्यापारराहित्यप्रकारमध्यात्मयोगाधिगमेनेति निर्दिष्टजीवस्वरूपज्ञानप्रकारं दर्शयति । यच्छेद्वाङ्मनसी प्राज्ञ इत्यादिना । इमं मन्त्रं प्रस्त्युत्येत्थं हि भाष्यकृता हयादिरूपितानामिन्द्रियादीनां वशीकरणप्रकारोऽयमुच्यते वाचं मनसि नियच्छेत् । वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः । वाक्शब्दे द्वितीयायाः "सुपां सुलुक्" पा. सू. ७।१।३९ इत्यादिना लुक् । मनसी इति सप्तम्यां छान्दसो दीर्घः । तन्मनो बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ आत्मनि वर्तमाने ज्ञाने

**ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥**

[शांकरभाष्यम्] महति प्रथमजे नियच्छेत्। प्रथमजवत्स्वच्छस्वभावकमात्मनो विज्ञानमापादयेदित्यर्थः। तं च महान्तमात्मानं यच्छेच्छान्ते सर्वविशेषप्रत्यस्तमितरूपेऽविक्रिये सर्वान्तरे सर्वबुद्धिप्रत्ययसाक्षिणि मुख्य आत्मनि ॥ १३॥

[प्रकाशिका] नियच्छेदित्यर्थः। बुद्धिं कर्तरि महत्यात्मनि नियच्छेत्। इति तं कर्तारं परस्मिन्ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत्। व्यत्ययेन तदिति नपुंसकलिङ्गता। एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थ इति भाषितम्। विवृतं च श्रुतप्रकाशिकायाम्। वाचो मनसि नियमनं मनोऽननुगुणप्रवृत्तिवैमुख्यापादनम्। मनसो बुद्धौ नियमनं व्यवसायानुगुणप्रवृत्तितापादनम्। बुद्धिश्चार्थेषु हेयताध्यवसायरूपा तस्या बुद्धेरात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम्। शान्ते स्वत ऊर्मिषट्कप्रतिभटे शान्त आत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषताप्रतिपत्तिरिति। आत्मशब्दस्य पुंलिङ्गतच्छब्देन निर्देष्टव्ये छान्दसत्वाल्लिङ्गव्यत्ययः। ननु भाष्ये ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थ इत्युक्तिरयुक्ता। अव्यावर्तकत्वादात्मनि वर्तमाने इति विशेषणस्याऽऽत्मन्यवर्तमानज्ञानस्यैवाभावात्। न च तद्यच्छेज्ज्ञान इत्येतावत्युक्त आत्मरूपज्ञानभ्रान्तिः स्यात् अतो ज्ञान आत्मनीत्युक्तमिति वक्तुं शक्यम्। तथा सति तस्या एव भ्रान्तेः सामानाधिकरण्ययोजनया दृढीकरणप्रसङ्गात्। न ह्यात्मनीत्यनेनात्मभ्रान्तिर्व्युदस्यते। न चात्मनि वर्तमान इति भाष्यस्यात्मनि विषयविषयिभावलक्षणसंबन्धेन वर्तमान इत्यर्थः। आत्मविषयकज्ञान इति यावत्। अतो व्यावर्तकतया न वैयर्थ्यदोष इति वाच्यम्। तथा सति ज्ञानमात्मनि महति नियच्छेदित्यस्य वैयर्थ्यापातात्। तदर्थस्यापि तेनैव सिद्धेरिति चेदुच्यते। अयमभिप्रायो भाष्यकारस्य तद्यच्छेज्ज्ञान आत्मनीत्यत्रात्मनीति विषयसप्तमी तच्चात्मविषयकं ज्ञानमात्मोपादेयस्तदतिरिक्ता अर्था हेया इत्येवंरूपम्। तच्चार्थेषु हेयताध्यवसायरूपा बुद्धिरिति श्रुतप्रकाशिकायां व्यक्तम्। अस्य चात्मानात्मविषयकाहेयहेयताध्यवसायरूपस्य ज्ञानस्य महत्यात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनमिति तत्रैव श्रुतप्रकाशिकायामुक्तत्वात्। वाक्यद्वयस्यापि सप्रयोजनतया तदुक्तवैयर्थ्यशङ्कानवकाश इति ॥ १३ ॥

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥१४॥**
**अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥१५॥**

[शांकरभाष्यम्] एवं पुरुष आत्मनि सर्वं प्रविलाप्य नामरूपकर्मत्रयं यन्मिथ्याज्ञानविजृम्भितं क्रियाकारकफललक्षणं स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थः प्रशान्तात्मा कृतकृत्यो भवति यतोऽतस्तद्दर्शनार्थमनाद्यविद्याप्रसुप्ता उत्तिष्ठत हे जन्तव आत्मज्ञानाभिमुखा भवत, जाग्रताज्ञाननिद्राया घोररूपायाः सर्वानर्थबीजभूतायाः क्षयं कुरुत । कथम् । प्राप्योपगम्य वरान्प्रकृष्टानाचार्यांस्तद्विदस्तदुपदिष्टं सर्वान्तरमात्मानमहमस्मीति निबोधतावगच्छत । न ह्युपेक्षितव्यमिति श्रुतिरनुकम्पयाह मातृवत् । अतिसूक्ष्मबुद्धिविषयत्वाज्ज्ञेयस्य किमिव सूक्ष्मबुद्धिरित्युच्यते । क्षुरस्य धाराग्रं निशिता तीक्ष्णीकृता दुरत्यया दुःखेनात्ययो यस्याः सा दुरत्यया । यथा सा पद्भ्यां दुर्गमनीया तथा दुर्गं दुःसंपाद्यमित्येतत्पथः पन्थानं तत्त्वज्ञानलक्षणं मार्गं कवयो मेधाविनो वदन्ति । ज्ञेयस्यातिसूक्ष्मत्वात्तद्विषयस्य ज्ञानमार्गस्य दुःसंपाद्यत्वं वदन्तीत्यभिप्रायः १४

तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येत्युच्यते । स्थूला तावदियं मेदिनी शब्द-

[प्रकाशिका] एवं वशीकरणप्रकारमुपदिश्याधिकारिपुरुषानभिमुखीकरोति—आत्मज्ञानाभिमुखा भवताज्ञाननिद्रायाः क्षयं कुरुत । वराञ्श्रेष्ठानाचार्यानुपसंगम्यात्मतत्त्वं निबोधत । यद्वोपासिताद्भगवतो ब्रह्मविद्भ्यो वा देवतापारमार्थ्यं च यथावद्वेत्स्यते भवानित्येवंरूपान्वरान्प्राप्य ज्ञेयतात्मतत्त्वं निबोधत नोदासितव्यमिति भावः । ज्ञानिनस्तदात्मतत्त्वं दुर्गमं पन्थानं वर्णयन्ति तत्कस्य हेतोः । यत आत्मतत्त्वं क्षुरस्यायुधविशेषस्य धाराग्रं निशिता तीक्ष्णा दुरत्ययाऽनतिक्रमणीया । तीक्ष्णक्षुराग्रे संचरतः पुंसो यथा कियत्यप्यनवधान आत्मनाशो भवति । एवमिहात्मस्वरूपावगतिदशायां स्वल्पेऽप्यनवधानापराध आत्मनाशो भवतीति भावः ॥ १४ ॥

उपसंहरति—अत्र नित्यमित्येतदशब्दमित्यादौ प्रत्येकं संबध्यते । अशब्दत्वादिवशादेव कालवदव्ययम् । अथवापचयशून्यमित्यर्थः । महत इत्यनेनात्मनि महति नियच्छेदिति पूर्वमन्त्रनिर्दिष्टो जीवो गृह्यते । ध्रुवं स्थिरं निचाय्य दृष्ट्वा दर्शनसमानाकारोपासनेन विषयीकृत्येत्यर्थः ।

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम् ।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥**
**य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।**
**प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥**

इति काठकोपनिषदि प्रथमाध्याये तृतीया वल्ली समाप्ता ॥ ३ ॥

[शांकरभाष्यम्] स्पर्शरूपरसगन्धोपचिता सर्वेन्द्रियविषयभूता तथा शरीरम्। तत्रैकैकगुणापकर्षेण गन्धादीनां सूक्ष्मत्वमहत्त्वविशुद्धत्वानित्यत्वादितारतम्यं दृष्टमबादिषु यावदाकाशमिति ते गन्धादयः सर्व एव स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति किमु तस्य सूक्ष्मत्वादिनिरतिशयत्वं वक्तव्यमित्येतद्दर्शयति श्रुतिः- अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् । एतद्व्याख्यातं ब्रह्माव्ययम् । यद्धि शब्दादिमत्तद्व्येतीदं त्वशब्दादिमत्त्वादव्ययं न व्येति न क्षीयते । अत एव च नित्यं यद्धि व्येति तदनित्यमिदं तु न व्येत्यतो नित्यम् । इतश्च नित्यमनाद्यविद्यमान आदिः कारणमस्य तदिदमनादि । यद्ध्यादिमत्कार्यत्वादनित्यं कारणे प्रलीयते यथा पृथिव्यादि । इदं तु सर्व-कारणत्वादकार्यमकार्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिन्प्रलीयते । तथानन्तमविद्यमानोऽन्तः कार्यमस्य तदनन्तम् । यथा कदल्यादेः फलादि-कार्योत्पादनेनाप्यनित्यत्वं दृष्टं न च तथाप्यन्तवत्त्वं ब्रह्मणोऽतोऽपि नित्यम् । महतो महत्तत्त्वाद्बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरूप-त्वात्सर्वसाक्षि हि सर्वभूतात्मत्वाद्ब्रह्म । उक्तं ह्येष सर्वेषु भूतेष्वित्यादि । ध्रुवं च कूटस्थं नित्यं न पृथिव्यादिवदापेक्षिकं नित्यत्वम् । तदेवंभूतं ब्रह्मा-त्मानं निचाय्यावगम्य तमात्मानं मृत्युमुखान्मृत्युगोचरादविद्याकामकर्म-लक्षणात्प्रमुच्यते वियुज्यते ॥ १५ ॥

प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः—नाचिकेतं नचिकेतसा प्राप्तं नाचि-केतं मृत्युना प्रोक्तं मृत्युप्रोक्तमिदमाख्यानमुपाख्यानं वल्लीत्रयलक्षणं सना-तनं चिरंतनं वैदिकत्वादुक्त्वा ब्राह्मणेभ्यः श्रुत्वाचार्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन्महीयत आत्मभूत उपास्यो भवतीत्यर्थः ॥ १६ ॥

यः कश्चिदिमं ग्रन्थं परमं प्रकृष्टं गुह्यं गोप्यं श्रावयेद्ग्रन्थतोऽर्थतश्च

[प्रकाशिका] मृत्युमुखादिति भीषणात्संसारादित्यर्थः ॥१५॥

नचिकेतसा प्राप्तं नाचिकेतम्। मृत्युप्रोक्तं मृत्योः प्रवक्तृत्वमेव न स्वतन्त्रव-

**पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन् ।**
**कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥**

[शांकरभाष्यम्] ब्राह्मणानां संसदि ब्रह्मसंसदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेद्भुञ्जानानां तच्छ्राद्धमस्यानन्त्यायानन्तफलाय कल्पते संपद्यते । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ १७ ॥

इति काठकोपनिषदि प्रथमाध्याये तृतीयवल्लीभाष्यं समाप्तम् ॥ ३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमदाचार्यश्रीशङ्करभगवतः कृतौ काठकोपनिषद्भाष्ये
प्रथमोऽध्यायः समाप्तः ॥ १ ॥

एष सर्वेषु भुतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्येत्युक्तम् । कः पुनः प्रतिबन्धोऽग्र्याया बुद्धेर्येन तदभावादात्मा न दृश्यत इति तद्दर्शनकारणप्रदर्शनार्था वल्ल्यारभ्यते । विज्ञाते हि श्रेयःप्रतिबन्धकारणे तदपनयनाय यत्न आरब्धुं शक्यते नान्यथेति—पराञ्चि परागञ्चन्ति गच्छन्तीति खानि तदुपलक्षितानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते । तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्तन्ते यस्मादेवंस्वभावकानि तानि व्यतृणद्धिंसितवान्हननं कृतवानित्यर्थः । कोऽसौ । स्वयंभूः परमेश्वरः स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति । तस्मात्पराङ्पराग्रूपाननात्मभूताञ्शब्दादीन्पश्यत्युपलभत उपलब्धा नान्तरात्मन्नान्तरात्मानमित्यर्थः । एवंस्वभावेऽपि सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतःप्रवर्तनमिव धीरो धीमान्विवेकी प्रत्यगात्मानं प्रत्यक्चासावात्मा चेति प्रत्यगात्मा । प्रतीच्येवात्मशब्दो रूढो लोके नान्यस्मिन् । व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्तते ।

[प्रकाशिका] कर्तृत्वम् अत एव सनातनम् । अपौरुषेयत्वात्प्रवाहरूपेण नित्यमित्यर्थः । स्पष्टोऽर्थः । ब्रह्मसंसदि ब्राह्मणसमाजे । प्रयतः शुद्धः ॥ १७॥

तृतीया वल्ली समाप्ता ॥

उत्तिष्ठत जाग्रतेति प्रोत्साहनेऽप्यात्मस्वरूपविमुखान्पश्यञ्शोचति । खानीन्द्रियाणि पराञ्चि पराञ्चन्ति पराञ्चि परप्रकाशकानि न त्वात्मप्रकाशकानि । तत्र हेतुं वदञ्शोचति । व्यतृणत्स्वयंभूः स्वतन्त्र ईश्वर इमानि खानि हिंसितवान् । तृहू हिंसायामिति धातुः । यद्वा धातूनामनेकार्थत्वात् । परार्थप्रकाशकानीन्द्रियाणि सृष्टवानित्यर्थः । पराक्पराच इति यावत् । पराग्रूपाननात्मभूतान्पश्यन्त्युपलभन्ते । अन्तरात्मानं नेत्यर्थः ।

**पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।**
**अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥२॥**

[शांकरभाष्यम्] " यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति कीर्त्यते " ॥

इत्यात्मशब्दव्युत्पत्तिस्मरणात् । तं प्रत्यगात्मानं स्वं स्वभावमैक्षदपश्यत्पश्यतीत्यर्थः । छन्दसि कालानियमात् कथं पश्यतीत्युच्यते—आवृत्तचक्षुरावृत्तं व्यावृत्तं चक्षुः श्रोत्रादिकमिन्द्रियजातमशेषविषयाद्यस्य स आवृत्तचक्षुः स एवं संस्कृतः प्रत्यगात्मानं पश्यति । न हि बाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणं चैकस्य संभवति । किमर्थं पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं कृत्वा धीरः प्रत्यगात्मानं पश्यतीत्युच्यते—अमृतत्वममरणधर्मत्वं नित्यस्वभावतामिच्छन्नात्मन इत्यर्थः ॥ १ ॥

यत्तावत्स्वाभाविकं परागेवानात्मदर्शनं तदात्मदर्शनस्य प्रतिबन्धकारणमविद्या तत्प्रतिकूलत्वाद्या च पराक्ष्वेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्यातृष्णाभ्यां प्रतिबद्धात्मदर्शनाः पराचो बहिर्गतानेव कामान्काम्यान्विषयाननुयान्ति अनुगच्छन्ति बाला अल्पप्रज्ञास्ते तेन कारणेन मृत्योरविद्याकामकर्मसमुदायस्य यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्वतो व्याप्तस्य पाशं पाश्यते बध्यते येन तं पाशं देहेन्द्रियादिसंयोगवियोगलक्षणम् । अनवरतजन्ममरणजरारोगाद्यनेकानर्थव्रातं प्रतिपद्यन्त इत्यर्थः ।

[ प्रकाशिका ] यद्वा पराङ्पराङ्मुखानि भूत्वा विषयानेव पश्यन्तीत्यर्थः । पराङ्पश्यतीति पाठे लोकाभिप्रायमेकवचनम् । इदृशेऽपि लोकस्वभावे नद्याः प्रतिस्रोतःप्रवृत्त इव कश्चित्पुरुषधौरेयः प्रत्यगात्मप्रवणोऽप्यस्तीत्याह—प्रत्यञ्चमात्मानं पश्यतीत्यर्थः । छान्दसं परस्मैपदम् । अत एव वर्तमानार्थे लङुपपत्तिश्च । चक्षुःशब्द इन्द्रियमात्रपरः स्वस्वविषयव्यावृत्तेन्द्रियो मुमुक्षुरित्यर्थः ॥ १ ॥

अल्पप्रज्ञा बाह्यान्काम्यमानान्विषयानेवावगच्छन्ति विस्तीर्णस्य संसारस्य बन्धनं यान्तीत्यर्थः । यद्वा विततस्य सर्वत्राप्रतिहताज्ञस्य मृत्योर्यमस्य पाशं यान्तीत्यर्थः । अथशब्दः प्रकृतविषयार्थान्तरपरिग्रहे । धीमन्तः प्रत्यगात्मन्येव ध्रुवममृतत्वं विदित्वेह संसारमण्डले ध्रुवेषु पदार्थेषु कमपि न प्रार्थयन्ते प्रत्यक्त्वज्ञस्य सर्वं जिहासितव्यमिति भावः । परात्मनः सर्वजीवगताहंतास्पदत्वेन मुख्याहमर्थत्वात्प्रत्यक्त्वमस्तीति द्रष्टव्यम् ॥२॥

**येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत् ॥ ३ ॥**
**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**

[शांकरभाष्यम्] यत एवमथ तस्माद्धीरा विवेकिनः प्रत्यगात्मस्वरूपावस्थानलक्षणममृतत्वं ध्रुवं विदित्वा । देवाद्यमृतत्वं ह्यध्रुवमिदं तु प्रत्यगात्मस्वरूपावस्थानलक्षणं " न कर्मणा वर्धते नो कनीयान् " बृ० ४।४।२३ इति ध्रुवम् । तदेवंभूतं कूटस्थमविचाल्यममृतत्वं विदित्वाध्रुवेषु सर्वपदार्थेष्वनित्येषु निर्धार्य ब्राह्मणा इह संसारेऽनर्थप्राये न प्रार्थयन्ते किंचिदपि प्रत्यगात्मदर्शनप्रतिकूलत्वात् पुत्रवित्तलोकैषणाभ्यो व्युत्तिष्ठन्त्येवेत्यर्थः ॥ २ ॥

यद्विज्ञानान्न किंचिदन्यत्प्रार्थयन्ते ब्राह्मणाः कथं तदधिगम इति । उच्यते—येन विज्ञानस्वभावेनात्मना रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान्मैथुननिमित्तान्सुखप्रत्ययान्विजानाति विस्पष्टं जानाति सर्वो लोकः । ननु नैवं प्रसिद्धिर्लोकस्यात्मना देहादिविलक्षणेनाहं विजानामीति । देहादिसंघातोऽहं विजानामीति तु सर्वो लोकोऽवगच्छति । न त्वेवम् । देहादिसंघातस्यापि शब्दादिस्वरूपत्वाविशेषाद्विज्ञेयत्वविशेषाच्च न युक्तं विज्ञातृत्वम् । यदि हि देहादिसंघातो रूपाद्यात्मकः सन्रूपादीन्विजानीयाद्बाह्या अपि रूपादयोऽन्योन्यं स्वं स्वं रूपं च विजानीयुः । न चैतदस्ति । तस्माद्देहादिलक्षणांश्च रूपादीनेतेनैव देहादिव्यतिरिक्तेनैव विज्ञानस्वभावेनात्मना विजानाति लोकः । यथा येन लोहो दहति सोऽग्निरिति तद्वत् । आत्मनोऽविज्ञेयं किमत्रास्मिँल्लोके परिशिष्यते न किंचित्परिशिष्यते । सर्वमेव त्वात्मना विज्ञेयम् । यस्यात्मनोऽविज्ञेयं न किंचित्परिशिष्यते स आत्मा सर्वज्ञः । एतद्वै तत् । किं तद्यन्नचिकेतसा पृष्टं देवादिभिरपि विचिकित्सितं धर्मादिभ्योऽन्यद्विष्णोः परमं पदं यस्मात्परं नास्ति तद्वा एतदधिगतमित्यर्थः। ३

अतिसूक्ष्मत्वाद्दुर्विज्ञेयमिति मत्वैतमेवार्थं पुनः पुनराह—स्वप्नान्तं स्वप्न-

[प्रकाशिका] मैथुनान्मैथुननिमित्तकसुखविशेषानित्यर्थः । निःशेषं येनैव साधनेन जानातीत्यर्थः । "तद्देवा ज्योतिषां ज्योतिः" बृ० ४।४।१६ इति रूपादिप्रकाशकानामिन्द्रियाणां तदनुगृहीतानामेव कार्यजनकत्वादिति भावः। तत्पूर्वं प्राप्यतया निर्दिष्टं विष्णोः परमं पदम् । एतद्वै, एतदेवैतन्मन्त्रप्रतिपाद्यात्मस्वरूपमेवेत्यर्थः ॥ ३ ॥

सकलं स्वाप्नप्रपञ्चं जाग्रत्प्रपञ्चं च मनआदीन्द्रियभावमापन्नेन येन परमा-

**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥**
**य इमं मध्वदं वेद आत्मानं जीवमान्तिकात् ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ ५ ॥**
**यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।**

[ शांकरभाष्यम् ] मध्यं स्वप्नविज्ञेयमित्यर्थः । तथा जागरितान्तं जागरितमध्यं जागरितविज्ञेयं च । उभौ स्वप्नजागरितान्तौ येनात्मनानुपश्यति लोक इति सर्वं पूर्ववत् । तं महान्तं विभुमात्मानं मत्वावगम्यात्मभावेन साक्षादहमस्मि परमात्मेति धीरो न शोचति ॥ ४ ॥

किंच—यः कश्चिदिमं मध्वदं कर्मफलभुजं जीवं प्राणादिकलापस्य धारयितारमात्मानं वेद विजानात्यन्तिकादन्तिके समीप ईशानमीशितारं भूतभव्यस्य कालत्रयस्य ततस्तद्विज्ञानादूर्ध्वमात्मानं न विजुगुप्सते न गोपायितुमिच्छत्यभयप्राप्तत्वात् । यावाद्धि भयमध्यस्थोऽनित्यमात्मानं मन्यते तावद्गोपायितुमिच्छत्यात्मनः । यदा तु नित्यमद्वैतमात्मानं विजानाति तदा किं कः कुतो वा गोपायितुमिच्छेदेतद्वै तदिति पूर्ववत् ॥ ५ ॥

यः प्रत्यगात्मेश्वरभावेन निर्दिष्टः स सर्वात्मेत्येतद्दर्शयति—यः कश्चिन्मुमुक्षुः पूर्वं प्रथमं तपसो ज्ञानादिलक्षणाद्ब्रह्मण इत्येतज्जातमुत्पन्नं हिरण्यगर्भम् । किमपेक्ष्य पूर्वमित्याह—अद्भ्यः पूर्वमप्सहितेभ्यः पञ्चभूतेभ्यो न केवलाभ्योऽद्भ्य इत्यभिप्रायः । अजायतोत्पन्नो यस्तं प्रथमजं देवादि-

[प्रकाशिका] त्मना लोकः पश्यतीत्यर्थः । तमिति शेषः । उक्तोऽर्थः ॥४॥

इदमिति लिङ्गव्यत्ययश्छान्दसः । इमं मध्वदमृतं पिबन्ताविति निर्दिष्टं कर्मफलभोक्तारं जीवात्मानं गुहां प्रविष्टावित्युक्तरीत्या तस्यान्तिके कालत्रयवर्तिचिदचिदीश्वरं च यो वेद तं दुष्कृतकारिणमपि न निन्देदित्यर्थः । "गुप्तिज्किद्भ्यः सन्" पा. सू. ३।१।६ इत्यत्र जुगुप्साशब्दो निन्दार्थक उक्तः । "जुगुप्साविरामप्रमादार्थानाम्" वा. इति। तत इति पञ्चमी। एतद्वै तदिति पूर्ववत् ॥ ५ ॥

"अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥" इति स्मृत्युक्तरीत्याद्भ्य उपादानेभ्यो व्यष्टिसृष्टेः पूर्वं योऽजायत तं तपसः संकल्पमात्रादेव पूर्वं जातम् । "यो देवानां प्रथमं पुरस्तात्" "विश्वाधिको रुद्रो महर्षिः" श्वे० ३ । ४ "हिरण्यगर्भं पश्यत जाय-

**गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वै तत् ॥ ६ ॥**
**या प्राणेन संभवत्यदितिर्देवतामयी ।**
**गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत । एतद्वै तत् ॥ ७ ॥**
**अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।**

[शांकरभाष्यम्] शरीराण्युत्पाद्य सर्वप्राणिगुहां हृदयाकाशं प्रविश्य तिष्ठन्तं शब्दादीनुपलभमानं भूतेभिर्भूतैः कार्यकारणलक्षणैः सह तिष्ठन्तं यो व्यपश्यत यः पश्यतीत्येतत् । य एवं पश्यति स एतदेव पश्यति यत्तत्प्रकृतं ब्रह्म ॥६॥

किंच—या सर्वदेवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भरूपेण परस्माद्ब्रह्मणः संभवति शब्दादीनामदनाददितिस्तां पूर्ववद्गुहां प्रविश्य तिष्ठन्तीमदितिम् । तामेव विशिनष्टि—या भूतेभिर्भूतैः सभन्विता व्यजायतोत्पन्नेत्येतत् ॥ ७ ॥

किंच---योऽधियज्ञ उत्तराधरारण्योर्निहितः स्थितो जातवेदा अग्निः पुनः सर्वहविषां भोक्ताध्यात्मं च योगिभिर्गर्भे इव गर्भिणीभिरन्तर्वत्नीभिरगर्हितान्नपानभोजनादिना यथा गर्भः सुभृतः सुष्ठु सम्यग्भृतो लोक इवेत्थमेवर्त्विग्भिर्योगिभिश्च सुभृत इत्येतत् । किंच दिवे दिवेऽहन्यहनीड्यः स्तुत्यो

[प्रकाशिका] मानम्" श्वे.४।१२ इति श्रुत्युक्तरीत्या प्रथमं जातं गुहां प्रविश्य तिष्ठन्तं हृदयगुहां प्रविश्य वर्तमानं भूतेभिर्भूतैर्देहेन्द्रियान्तःकरणादिभिरुपेतं चतुर्मुखमयं सकलजगत्स्रष्टा स्यादिति कटाक्षेणैक्षतेत्यर्थः । उक्तोऽर्थः ॥६॥

अयं च मन्त्रो "गुहां प्रविष्टौ" ब्र. सू. १।२।११ इति सूत्रे भगवता भाष्यकृता व्याख्यातः । इत्थं हि भाष्यकृता कर्मफलान्यत्तीत्यदितिर्जीव उच्यते । प्राणेन संभवति प्राणेन सह वर्तते । देवतामयीन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती हृदयपुण्डरीककुहरवर्तिनी । भूतेभिर्व्यजायत पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायत इति भाषितम् । तत्तदात्मकमित्यर्थः । अत्रैव प्रकरणे " ब्रह्मजज्ञं देवमीड्यं विदित्वा " का. १।१।१७इत्यत्र देवमित्यस्य परमात्मकमिति व्याख्यातत्वात्, "क्षेत्रज्ञं चापि मां विद्धि" भ. गी. १३।२ इत्येतदुपबृंहणगीतावचनेऽपि मां मदात्मकमिति भाष्यकृतैव व्याख्यातत्वात्, अपृथक्सिद्धविशेषणवाचिशब्दस्य विशेष्य इवापृथक्सिद्धविशेष्यवाचिशब्दस्यापि विशेषणे निरूढत्वात्तदात्मकमित्यर्थो युक्त इति द्रष्टव्यम् ॥ ७ ॥

अरण्योरधरोत्तरारण्योः स्थितोऽग्निः । गर्भिणीभिः पानभोजनादिना

**दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ॥**
**यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ॥**
**तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥ ९ ॥**
**यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्यु-**
**माप्नोति य इह नानेव पश्यति ॥ १० ॥**

[शांकरभाष्यम्] वन्द्यश्च कर्मिभिर्योगिभिश्चाध्वरे हृदये च जागृवद्भिर्जागरणशीलवद्भिरप्रमत्तैरित्येतद्धविष्मद्भिराज्यादिमद्भिर्ध्यानभावनावद्भिश्च मनुष्येभिर्मनुष्यैरग्निरेतद्वै तत्तदेव प्रकृतं ब्रह्म ॥ ८ ॥

किंच---यतश्च यस्मात्प्राणादुदेत्युत्तिष्ठति सूर्योऽस्तं निम्लोचनं यत्र यस्मिन्नेव च प्राणेऽहन्यहनि गच्छति तं प्राणमात्मानं देवा अग्न्यादयोऽधिदैवं वागादयश्चाध्यात्मं सर्वे विश्वेऽरा इव रथनाभावर्पिता संप्रवेशिताः स्थितिकाले । सोऽपि ब्रह्मैव । तदेतत्सर्वात्मकं ब्रह्म । तदु नात्येति नातीत्य तदात्मकतां तदन्यत्वं गच्छति कश्चन कश्चिदपि । एतद्वै तत् ॥ ९ ॥

यद्ब्रह्मादिस्थावरान्तेषु वर्तमानं तत्तदुपाधित्वादब्रह्मवदवभासमानं संसार्यन्यत्परस्माद्ब्रह्मण इति मा भूत्कस्यचिदाशङ्केतीदमाह--यदेवेह कार्यकारणोपाधिसमन्वितं संसारधर्मवदवभासमानमविवेकिनां तदेव स्वात्मस्थममुत्र नित्यविज्ञानघनस्वभावं सर्वसंसारधर्मवर्जितं ब्रह्म । यच्चामुत्रामुष्मिन्नात्मनि स्थितं तदेवेह नामरूपकार्यकारणोपाधिमनु विभाव्यमानं नान्यत् । तत्रैवं सत्युपाधिस्वभावभेददृष्टिलक्षणयाविद्यया मोहितः सन्य इह ब्रह्मण्यनाना-

[प्रकाशिका] सुभृतो गर्भ इव निहित इति पूर्वेणान्वयः । उदित्यवधारणे । अहन्यहनि जागरणशीलैरप्रमत्तैः स्तुत्यः । आज्यादिहविःप्रदानप्रवृत्तैर्ऋत्विग्भिः स्तुत्योऽग्निः । अग्रनेताऽरण्योर्निहित इति योजना । एतदग्निस्वरूपं तत्पूर्वोक्तब्रह्मात्मकमित्यर्थः ॥ ८ ॥

यस्माद्ब्रह्मणः सकाशात्सूर्य उदेति यत्र च लयमेति देवाः सर्वे तस्मिन्नात्मनि प्रतिष्ठिता इत्यर्थः । तत्सर्वात्मकं ब्रह्म कोऽपि नातिक्रामति छायावदन्तर्यामिणो दुर्लङ्घ्यत्वादिति भावः । उक्तोऽर्थः ॥ ९ ॥

ननु परमात्मनः सर्वात्मत्वं न संभवति । अहमित्यहन्ताश्रयत्वेनानुसंधीयमानो ह्यात्मा स चाहमिहैवास्मीति देशान्तरव्यावृत्ततयाऽनुसंधीयते तस्य कथं सर्वदेशकालवर्तिसर्वपदार्थात्मभूततत्त्वमित्याशङ्क्याह—यदेव परमात्मतत्त्वमत्र लोकेऽहमित्यनुसंधीयमानतयात्मभूतं तदेव लोकान्तरस्थाना-

**मनसैवेदमाप्तव्यं नेह नानास्ति किंचन ॥**
**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥**
**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति॥**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ १२ ॥**

[शांकरभाष्यम्] भूते परस्मादन्योऽहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते स मृत्योर्मरणान्मृत्युं मरणं पुनः पुनर्जन्ममरणभावमाप्नोति प्रतिपद्यते । तस्मात्तथा न पश्येत् । विज्ञानैकरसं नैरन्तर्येणाकाशवत्परिपूर्णं ब्रह्मैवाहमस्मीति पश्येदिति वाक्यार्थः ॥ १० ॥

प्रागेकत्वविज्ञानादाचार्यागमसंस्कृतेन मनसेदं ब्रह्मैकरसमाप्तव्यमात्मैव नान्यदस्तीति । आप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति किंचनाणुमात्रमपि । यस्तु पुनरविद्यातिमिरदृष्टिं न मुञ्चति नानेव पश्यति स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ॥ ११ ॥

पुनरपि तदेव प्रकृतं ब्रह्माह—अङ्गुष्ठमात्रोऽङ्गुष्ठपरिमाणः अङ्गुष्ठपरिमाणं हृदयपुण्डरीकं तच्छिद्रवर्त्यन्तःकरणोपाधिरङ्गुष्ठमात्रवंशपर्वमध्यवर्त्यम्बरवत् । पुरुषः पूर्णमनेन सर्वमिति । मध्य आत्मनि शरीरे तिष्ठति यस्तमात्मानमीशानं भूतभव्यस्य विदित्वा न तत इत्यादि पूर्ववत् ॥ १२ ॥

[ प्रकाशिका ] मप्याध्यात्मभूतामित्यर्थः । ततश्चात्मभेदो नास्तीत्यर्थः । अयमभिप्रायः । किं परमात्मतत्त्वविदामहमिहैवेति प्रतीतिः सर्वदेशकालवर्तिपदार्थात्मकत्वबाधकतयोपन्यस्यत उत तद्रहितानाम् । नाद्यः । तेषामहमिहैवेत्यादिप्रतीतेरेवाभावात् । प्रत्युताहम् मनुरभवं सूर्यश्चेति सर्ववस्तुवर्तितयैवानुभवात् । न द्वितीयः । अतत्त्वविदामहंप्रतीतेर्जीवमात्रविषयत्वेन तत्र देशान्तरव्यावृत्तत्वप्रतीतेस्तदानीमप्रतीतपरमात्मनि सर्वदेशवार्तिपदार्थात्मत्वविरोधित्वाभावादिति । इह परमात्मनि भेदमिव यः पश्यति स तु संसारात्संसारं प्राप्नोतीत्यर्थः ॥ १० ॥

नन्वस्माकं सर्वात्मभूतं परमात्मतत्त्वं कुतो नोपलभ्यत इत्यत्राह— इदमात्मस्वरूपं विशुद्धमनोग्राह्यमित्यर्थः । उक्तमेवार्थं दृढीकरणायाभ्यस्यति । स्पष्टोऽर्थः ॥ ११ ॥

कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुष उपासकशरीरेऽङ्गुष्ठपरिमाणः सन्नास्ते । ततो भूतभव्येश्वरत्वादेव वात्सल्यातिशयाद्देहगतानपि

[प्रकाशिका]दोषान्भोग्यतया पश्यतीत्यर्थः। ननु "प्राणाधिपः संचरति स्वकर्मभिः" श्वे.५।७ "अङ्गुष्ठमात्रो रवितुल्यरूपः" श्वे.५।८ "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्।" म. भा.व. इत्यादिश्रुतिस्मृतिष्वङ्गुष्ठमात्रत्वेन प्रतिपादितस्य जीवस्यैवास्मिन्मन्त्रे प्रतिपादनं किं न स्यात्। न च न तस्य भूतभव्येशानत्वादीति वाच्यम्। प्रथमश्रुतजीवलिङ्गानुरोधेन चरमश्रुतभूतभव्येशानत्वस्यापेक्षिकतया योजयितुं शक्यत्वादिति चेन्न। "शब्दादेव प्रमितः" ब्र. सू. १।३।२४ इत्यधिकरण एवमेव पूर्वपक्षं कृत्वा हृदयावच्छेदनिबन्धनाङ्गुष्ठपरिमाणस्य परमात्मन्यपि संभवात् "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः" १६।३ इति तैत्तिरीयके। "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः" इति ३।१३ श्वेताश्वतरे चाङ्गुष्ठमात्रत्वस्य परमात्मन्यपि श्रवणात्। असंकुचितभूतभव्येशितृत्वस्यानन्यथासिद्धब्रह्मलिङ्गत्वादयं मन्त्रः परमात्मपर एवेति सिद्धान्तितत्वात्। यत्त्वत्र कैश्चिदुच्यते—अङ्गुष्ठमात्रत्वं जीवलिङ्गमेव। अथाप्यङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठतीति पूर्वार्धेन जीवमनूद्य, ईशानो भूतभव्यस्य इत्यनेन परमात्मभावो विधीयत इति। तदसमञ्जसम्। तथाहि सति परमात्मन्यङ्गुष्ठमात्रत्वसंभावनाप्रदर्शकस्य "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" ब्र. सू. १।३।२५ इति सूत्रस्यासंगतिप्रसङ्गात्। ननु नास्मिन्मन्त्रे जीवानुवादेन ब्रह्मभावो विधीयते। आराग्रमात्रतया प्रतिपन्नस्य जीवस्याङ्गुष्ठमात्रत्वे प्रमाणाभावादिति तटस्थशङ्कापरिहारार्थं जीवस्याङ्गुष्ठमात्रत्वसाधनाय प्रवृत्तमिदं सूत्रमिति चेत्। तथाश्रयणस्य क्लिष्टत्वात्। नन्वीश्वरः शर्व ईशान इति निघण्टुपाठेनेशानशब्दस्य देवताविशेषे रूढत्वात् "शब्दादेव प्रमितः" ब्र. सू. १।३।२४ इति सूत्र ईशानो भूतभव्यस्येति शब्दादेव न तु भूतभव्यस्य सर्वस्येशितृत्वं कर्मवश्यजीवस्योपपद्यत इति भाष्यं व्याकुर्वद्भिर्व्यासार्यैरीशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात्, नात्र लिङ्गान्निर्णयः किं त्वीश्वरवाचिशब्दादेवेत्येवकाराभिप्राय इति व्याख्यातत्वात्, ईशानशब्दस्य श्रुतित्वाभ्युपगमात्, तयैव चेशानशब्दश्रुत्या जीवव्यावृत्तिवदेव नारायणस्यापि व्यावर्तितत्वेन रुद्रपरत्वमेव स्यादिति चेन्न। योगरूढिमतः पदस्य संनिधाववयवार्थविशेषकपदान्तरसंनिधाने रूढ्यनुन्मेषस्य। पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः। इत्यादिषु दर्शनात्। तत्र हि सरोरुहपदावयवार्थसरोविशेषकाग्रप-

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ॥**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ॥ १३ ॥**
**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ॥**
**एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १४ ॥**
**यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**

[शांकरभाष्यम्] किंच—अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकोऽधूमकमिति युक्तं ज्योतिष्परत्वात् । यस्त्वेवंलक्षितो योगिभिर्हृदय ईशानो भूतभव्यस्य स नित्यः कूटस्थोऽद्येदानीं प्राणिषु वर्तमानः स उ श्वोऽपि वर्तिष्यते नान्यस्तत्समोऽन्यश्च जनिष्यत इत्यर्थः । अनेन नायमस्तीति चैक इत्ययं पक्षो न्यायतोऽप्राप्तोऽपि स्ववचनेन श्रुत्या प्रत्युक्तस्तथा क्षणभङ्गवादश्च ॥१३॥

पुनरपि भेददर्शनापवादं ब्रह्मण आह—यथोदकं दुर्गे दुर्गमे देश उच्छ्रिते वृष्टं सिक्तं पर्वतेषु पर्वतवत्सु निम्नप्रदेशेषु विधावति विकीर्णं सद्विनश्यति एवं धर्मानात्मनो भिन्नान्पृथक्पश्यन्पृथगेव प्रतिशरीरं पश्यंस्तानेव शरीरभेदानुवर्तिनोऽनुविधावति । शरीरभेदमेव पृथक्पुनः प्रतिपद्यत इत्यर्थः ॥

यस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धविज्ञानघनैकरसमद्वयमात्मानं पश्यतो विजानतो मुनेर्मननशीलस्यात्मस्वरूपं कथं संभवतीत्युच्यते—यथोदकं शुद्धे प्रसन्ने शुद्धं प्रसन्नमासिक्तं प्रक्षिप्तमेकरसमेव नान्यथा तादृगेव भवत्यात्माप्येवमेव भवत्येकत्वं विजानतो मुनेर्मननशीलस्य हे गौतम ।

[प्रकाशिका] दोपादानेन सरोरुहपदरूढिभङ्गस्य दर्शनात् । इतरथा पद्मानीति पदानुपादानत्वापत्तेः । अत ईशानशब्दस्य न श्रुतित्वम् । एतत्स्वरसादेव व्यासार्यैरपि यथाश्रुतभाष्यानुगुण्येन यद्वेति पक्षान्तरस्याश्रितत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः । उक्तोऽर्थः ॥ १२ ॥

शुष्केन्धनानलवत्प्रकाशमान इत्यर्थः । अद्यतनपदार्थजातं श्वस्तनपदार्थजातं कालत्रयवर्तिपदार्थजातमपि तदात्मकमित्यर्थः । पूर्ववत् ॥ १३ ॥

पर्वतमूर्ध्नि वृष्टं प्रत्यन्तपर्वतेषु नानाभूततया पतित्वा पतित्वा धावति । एवं परमात्मगतदेवान्तर्यामित्वमनुष्यान्तर्यामित्वादिधर्मान्पृथगधिकरणनिष्ठान्पश्यन्पर्वतनिर्झरपातमनुकृत्य संसारकुहरे पततीत्यर्थः ॥ १४ ॥

सर्वत्रैकात्मकत्वज्ञानस्य फलमाह—यथा शुद्धजले शुद्धजलं योजितं तत्सदृशमेव भवति न कथंचिद्विसदृशमेवमित्थं विजानतो मननशीलस्यात्मापि परमात्मज्ञानेन विशुद्धः सन्विशुद्धेन परमात्मना समानो भवतीत्यर्थः ।

**एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥**

**इति काठकोपनिषदि द्वितीयाध्याये प्रथमा वल्ली समाप्ता ॥२॥ (४)**

**पुरमेकादशद्वारमजस्यावक्रचेतसः ।**

**अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वै तत् ॥ १ ॥**

[शांकर०] तस्मात्कुतार्किकभेददृष्टिं नास्तिककुदृष्टिं चोज्झित्वा मातापितृसहस्रेभ्योऽपि हितैषिणा वेदेनोपदिष्टमात्मैकत्वदर्शनं शान्तदर्पैरादरणीयमित्यर्थः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमदाचार्यश्रीशंकरभगवतः कृतौ काठकोपनिषद्भाष्ये
द्वितीयाध्याये प्रथमवल्ली समाप्ता ॥ १ ॥ ( ४ )

पुनरपि प्रकारान्तरेण ब्रह्मतत्त्वनिर्धारणार्थोऽयमारम्भो दुर्विज्ञेयत्वाद्ब्रह्मणः—पुरं पुरमिव पुरं द्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसंपत्तिदर्शनाच्छरीरं पुरम् । पुरं च सोपकरणं स्वात्मनासंहतस्वतन्त्रस्वाम्यर्थं दृष्टम् । तथेदं पुरसामान्यादनेकोपकरणसंहतं शरीरं स्वात्मनासंहतराजस्थानीयस्वाम्यर्थं भवितुमर्हति । तच्चेदं शरीराख्यं पुरमेकादशद्वारमेकादश द्वाराण्यस्य सप्त शीर्षण्यानि नाभ्या सहार्वाञ्चि त्रीणि शिरस्येकं तैरेकादशद्वारं पुरं कस्याजस्य जन्मादिविक्रियारहितस्यात्मनो राजस्थानीयस्य पुरधर्मविलक्षणस्य । अवक्रचेतसोऽवक्रमकुटिलमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपं चेतो विज्ञानमस्येत्यवक्रचेतास्तस्यावक्रचेतसो राजस्थानीयस्य ब्रह्मणः । यस्येदं पुरं तं परमेश्वरं पुरस्वामिनमनुष्ठाय ध्यात्वा । ध्यानं हि तस्यानुष्ठानं सम्यग्विज्ञानपूर्वकम् । तं सर्वैषणाविनिर्मुक्तः सन्समं सर्वभूतस्थं ध्यात्वा न शोचति । तद्विज्ञानादभयप्राप्तेः शोकावसराभावात्कुतो भयेक्षा । इहैवाविद्याकृतकामकर्मबन्धनैर्विमुक्तो भवति । विमुक्तश्च सन्विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः ॥ १ ॥

[ प्रकाशिका ] गौतमेति प्राप्यवैभवं सूचयन्सहर्षं संबोधयति ॥ १९ ॥

समाप्ता प्रथमा वल्ली ।

जननादिविक्रियारहितस्य ऋजुबुद्धेर्विवेकिन आत्मन एकादशेन्द्रियलक्षणबहिर्निर्गमद्वारोपेतं शरीराख्यं पुरं भवति । पुरस्वामिनो यथा पुरं विविक्तं भवति तथा शरीरमपि स्वात्मनो विविच्य ज्ञातं भवति । अविवेकिनस्तु देह आत्मैव भवतीति भावः । अनुष्ठाय न शोचति । विविच्य जानन्देहानुबन्धिभिर्दुःखैः कामादिभिश्च विमुक्तो भवतीत्यर्थः । विमुक्तश्च

**हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्**

[शांकरभाष्यम्] स तु नैकशरीरपुरवर्त्येवात्मा किं तर्हि सर्वपुरवर्ती । कथम्—हंसो हन्ति गच्छतीति । शुचिषच्छुचौ दिव्यादित्यात्मना सीदतीति । वसुर्वासयति सर्वानिति । वाय्वात्मनाऽन्तरिक्षे सीदतीत्यन्तरिक्षसत् । होताग्निः । "अग्निर्वै होता" इति श्रुतेः । वेद्यां पृथिव्यां सीदतीति वेदिषत् । "इयं वेदिः परोऽन्तः पृथिव्याः" इत्यादिमन्त्रवर्णात् । अतिथिः सोमः सन्दुरोणे कलशे सीदतीति दुरोणसत् । ब्राह्मणोऽतिथिरूपेण वा दुरोणेषु गृहेषु सीदतीति । नृषन्नृषु मनुष्येषु सीदतीति नृषत् । वरसद्वरेषु देवेषु सीदतीति । ऋतसदृतं सत्यं यज्ञो वा तस्मिन्सीदतीति । व्योमसद्व्योम्न्याकाशे सीदतीति व्योमसत् । अब्जा अप्सु शङ्खशुक्तिमकरादिरूपेण जायत इति । गोजा गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति । ऋतजा यज्ञाङ्गरूपेण जायत इति । अद्रिजाः पर्वतेभ्यो नद्यादिरूपेण जायत इति । सर्वात्मापि सन्नृतमवितथस्वभाव एव । बृहन्महान्सर्वकारणत्वात् । यदाप्यादित्य एव मन्त्रेणोच्यते तदाप्यस्यात्मस्वरूपत्वमादित्यस्येत्यङ्गीकृतत्वाद्ब्राह्मणव्याख्यानेऽप्यविरोधः । सर्वव्याप्येक एवात्मा जगतो, नात्मभेद इति मन्त्रार्थः ॥ २ ॥

[प्रकाशिका] विमुच्यते । जीवदशायामाध्यात्मिकादिदुःखरागद्वेषादिविमुक्त एव सन् "भोगेन त्वितरे क्षपयित्वा संपद्यते" ब्र० सू० ४।१।१९ इति न्यायेन प्रारब्धकर्मावसानेऽर्चिरादिना विरजां प्राप्य प्रकृतिसंबन्धविमुक्तो भवतीत्यर्थः । एतन्मन्त्रप्रतिपाद्यमुक्तस्वरूपमपि परमात्मकमेवेत्यर्थः ॥ १ ॥

पुनरप्यस्य सर्वात्मतामेव प्रथयति--हंसः सूर्यः । शुचौ ग्रीष्मर्तौ सीदतीति शुचिषत्तेजस्वीति यावत् । वासयतीति वसुर्वायुः । अन्तरिक्षसत्, अन्तरिक्षगतो वायुः । वेद्यन्तवर्तमान ऋत्विग्विशेषोऽग्निर्वा । दुरोणं गृहं गृहगतोऽतिथिः । नृष्वात्मतया वर्तमानं, वरेषु देवेषु च तथा वर्तमानं, ऋते सत्यलोके सीदतीति ऋतसत्, व्योम्नि परमपदे वर्तमानं च प्रत्यक्तत्त्वम् । अब्जा जलजाः । गोजा भूजाः । ऋतजा यज्ञोत्पन्नाः कर्मफलभूताश्च सर्गादय इति यावत् । यद्वा चिरकालस्थायितया ऋतशब्दिताकाशजा इत्यर्थः । अद्रिजाः पर्वतजाः । एतत्सर्वं बृहद्दतमपरिच्छिन्नसत्यरूपब्रह्मात्मकमित्यर्थः ॥ २ ॥

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ॥**
**मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥**
**अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ॥**
**देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥ ४ ॥**
**न प्राणेन नापानेन मर्त्यो जीवति कश्चन ॥**

[शांकरभाष्यम्] आत्मनः स्वरूपाधिगमे लिङ्गमुच्यते—ऊर्ध्वं हृदयात्प्राणं प्राणवृत्तिं वायुमुन्नयत्यूर्ध्वं गमयति। तथापानं प्रत्यगधोऽस्यति क्षिपति य इति वाक्यशेषः। तं मध्ये हृदयपुण्डरीकाकाश आसीनं बुद्धावभिव्यक्तविज्ञान-प्रकाशनं वामनं संभजनीयं सर्वे विश्वे देवाश्चक्षुरादयः प्राणा रूपादिविज्ञानं बलिमुपाहरन्तो विश इव राजानमुपासते तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थः। यदर्था यत्प्रयुक्ताश्च सर्वे वायुकरणव्यापाराः सोऽन्यः सिद्ध इति वाक्यार्थः ॥ ३ ॥

किंच—अस्य शरीरस्थस्यात्मनो विस्रंसमानस्यावस्रंसमानस्य भ्रंशमानस्य देहिनो देहवतः। विस्रंसनशब्दार्थमाह—देहाद्विमुच्यमानस्येति। किमत्र परिशिष्यते प्राणादिकलापे न किंचन परिशिष्यतेऽत्र देहे पुरस्वामिविद्रवण इव पुरवासिनां यस्यात्मनोऽपगमे क्षणमात्रात्कार्यकरणकलापरूपं सर्वमिदं हतबलं विध्वस्तं भवति विनष्टं भवति सोऽन्यः सिद्धः ॥ ४ ॥

स्यान्मतं प्राणापानाद्यपगमादेवेदं विध्वस्तं भवति न तु तद्व्यतिरिक्तात्मापगमात्प्राणादिभिरेव हि मर्त्यो जीवतीति। नैतदस्ति—न प्राणेन नापा-

[प्रकाशिका] सर्वेषां हृदयगतः परमात्मा प्राणवायुमूर्ध्वमुखमुन्नयति अपानवायुमधोमुखं क्षिपति। हृदयपुण्डरीकमध्य आसीनं वामनं वमनीयं भजनीयम्। अथ वा हृदयपुण्डरीकपरिमिततया ह्रस्वपरिमाणमित्यर्थः। तं सत्त्वप्रकृतयः सर्वेऽप्युपासत इत्यर्थः ॥ ३॥

एवं परमात्मानमुपासीनस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" छा० ६।१४।२ इति श्रुत्युक्तरीत्या शरीरपात एवान्तरायो न किंचित्कर्तव्यं परिशिष्यत इत्याह—अस्योपासकस्य देहिनः शरीरस्थस्य शरीरप्रतिष्ठितस्य दृढशरीरस्येति यावत्। एवंभूतस्य वा विस्रंसमानस्य शिथिलीभवद्गात्रस्य वा देहाद्विमुच्यमानस्य म्रियमाणस्य वा किमत्र परिशिष्यते। कृतकृत्यत्वात्कर्तव्यं किमपि नावशिष्यत इति भावः। पूर्ववत् ॥४॥

तस्य सर्वप्राणिप्राणनहेतुत्वरूपं महिमानमाह—स्पष्टोऽर्थः। केनेतरेण

**इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥**
**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥**
**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।**
**स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥**

[शांकरभाष्यम्] नेन चक्षुरादिना वा मर्त्यो मनुष्यो देहवान्कश्चन जीवति न कोऽपि जीवति । न ह्येषां परार्थानां संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते । स्वार्थेनासंहतेन परेण केनचिदप्रयुक्तं संहतानामवस्थानं न दृष्टं गृहादीनां लोके तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हति । अत इतरेणैव संहतप्राणादि-विलक्षणेन तु सर्वे संहताः सन्तो जीवन्ति प्राणान्धारयन्ति । यस्मिन्सं-हतविलक्षण आत्मनि सति परस्मिन्नेतौ प्राणापानौ चक्षुरादिभिः संहतावु-पाश्रितौ यस्यासंहतस्यार्थे प्राणापानादिः स्वव्यापारं कुर्वन्वर्तते संहतः सन्स ततोऽन्यः सिद्ध इत्यभिप्रायः ॥ ५ ॥

हन्तेदानीं पुनरपि ते तुभ्यमिदं गुह्यं गोप्यं ब्रह्म सनातनं चिरंतनं प्रवक्ष्यामि । यद्विज्ञानात्सर्वसंसारोपरमो भवति, अविज्ञानाच्च यस्य मरणं प्राप्य यथात्मा भवति यथा संसरति तथा शृणु हे गौतम ॥ ६ ॥

योनिं योनिद्वारं शुक्रबीजसमन्विताः सन्तोऽन्ये केचिदविद्यावन्तो मूढाः प्रपद्यन्ते शरीरत्वाय शरीरग्रहणार्थं देहिनो देहवन्तः, योनिं प्रवि शन्तीत्यर्थः । स्थाणुं वृक्षादिस्थावरभावमन्येऽत्यन्ताधमा मरणं प्राप्या-नुसंयन्त्यनुगच्छन्ति । यथाकर्म यद्यस्य कर्म तद्यथाकर्म यैर्यादृशं कर्मेह जन्मनि कृतं तद्वशेनेत्येतत् । तथा च यथाश्रुतं यादृशं च विज्ञानमुपार्जितं तदनुरूपमेव शरीरं प्रतिपद्यन्त इत्यर्थः । "यथाप्रज्ञं हि संभवाः" इति श्रुत्यन्तरात् ॥ ७ ॥

[प्रकाशिका] जीवन्तीत्यत्राह—यदधीनं प्राणापानयोरपि जीवनं तदधीनमेव सर्वेषां जीवनमिति भावः ॥ ५ ॥

गुह्यमतिरहस्यं सनातनं ब्रह्म ते पुनरपि प्रवक्ष्यामि । हन्तेति स्वग-तमाश्चर्ये । हे गौतम, आत्मा मरणं मोक्षं प्राप्य यथा यत्प्रकारविशिष्टो भवति तथा पुनरपि मुमुक्षवे रागाद्यनुपहतायोपदेशयोग्याय तुभ्यं वक्ष्या-मीत्यर्थः ॥ ६ ॥

अधिकारिविशेषनिर्देशपरेण हन्त त इत्यनेन सूचितमर्थं विवृणोति-

**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।**
**तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ ८ ॥**
**अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।**

[शांकरभाष्यम्] यत्प्रतिज्ञातं गुह्यं ब्रह्म वक्ष्यामीति तदाह—य एष सुप्तेषु प्राणादिषु जागर्ति न स्वपिति । कथम् । कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्मिमाणो निष्पादयञ्जागर्ति पुरुषो यस्तदेव शुक्रं शुभ्रं शुद्धं तद्ब्रह्म नान्यद्गुह्यं ब्रह्मास्ति । तदेवामृतमविनाश्युच्यते सर्वशास्त्रेषु । किंच पृथिव्यादयो लोकास्तस्मिन्नेव सर्वे ब्रह्मण्याश्रिताः सर्वलोककारणत्वात्तस्य । तदु नात्येति कश्चनेत्यादि पूर्ववदेव ॥ ८ ॥

अनेकतार्किककुबुद्धिविचालितान्तःकरणानां प्रमाणोपपन्नमप्यात्मैकत्वविज्ञानमसकृदुच्यमानमप्यनृजुबुद्धीनां ब्राह्मणानां चेतसि नाधीयत इति तत्प्रतिपादन आदरवती पुनः पुनराह श्रुतिः—अग्निर्यथैक एव प्रकाशात्मा सन्भुवनं भवन्त्यस्मिन्भूतानीति भुवनमयं लोकस्तमिमं प्रविष्टोऽनुप्रविष्टः । रूपं रूपं प्रति दार्वादिदाह्यभेदं प्रतीत्यर्थः । प्रतिरूपस्तत्र तत्र प्रतिरूपवान्दाह्यभेदेन बहुविधो बभूव । एक एव तथा सर्वभूतान्तरात्मा सर्वेषां भूतानाम-

[प्रकाशिका] अन्ये परमात्मतत्त्वश्रवणविमुखास्त्वद्विसदृशाः शरीरपरिग्रहाय ब्राह्मणादियोनिं प्रतिपद्यन्ते । अन्ये स्थावरभावमनुगच्छन्ति । स्वानुष्ठितयज्ञादिकर्मोपासनानतिक्रमणेन "रमणीयचरणाः" छा० ५।१०।७ " तं विद्याकर्मणी समन्वारभेते " बृ० ४।४।२ इत्यादिश्रुत्यनुरोधादिति भावः ॥ ७॥

एवं शिष्यं प्ररोचनयाभिमुखीकृत्य प्रकृतमनुसरति । सर्वेषु सुप्तेषु जीवेषु । कामं कामं, णमुलन्तमिदं संकल्प्य संकल्प्येत्यर्थः । न तु सर्वान्कामांश्छन्दतः प्रार्थयस्वेति प्रकृताः पुत्रादयः कामशब्देन निर्दिश्यन्ते । अयं चार्थः संध्याधिकरणे ब्र० सू० ३।२।१ भाष्यश्रुतप्रकाशिकयोः स्पष्टः । संकल्प्य संकल्प्य स्वच्छन्दानुरोधेन निर्मिमाणः पुरुषो योऽस्तीत्यर्थः । तदेव प्रकाशकं तदेवानन्याधीनममृतमुच्यत इत्यर्थः । शिष्टं स्पष्टम् । नित्यमुक्तानाममृतत्वसत्त्वेऽपि निरुपाधिकामृतत्वाभावात्तदेवामृतमित्यवधारणस्य नानुपपत्तिरिति द्रष्टव्यम् । तेनामृतान्तरनिषेधान्मुक्तपरमात्मनोरभेदप्रत्याशा प्रत्युक्ता । अत्रत्यामृतशब्दस्य निरुपाधिकामृतवाचित्वात् ॥ ८ ॥

एक एवात्मा सर्वेषामहमर्थतयास्त इत्यस्यार्थस्य दुर्बोधत्वात्तद्दृढी-

**एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥**
**वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ॥**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥**
**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ॥**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ११**

[ शांकरभाष्यम् ] भ्यन्तर आत्मातिसूक्ष्मत्वाद्दार्वादिष्विव सर्वदेहं प्रति प्रविष्टत्वात्प्रतिरूपो बभूव बहिश्च स्वेनाविकृतेन रूपेणाकाशवत् ॥ ९ ॥

तथान्यो दृष्टान्तः—वायुर्यथैक इत्यादि । प्राणात्मना देहेष्वनुप्रविष्टो रूपं रूपं प्रतिरूपो बभूवेत्यादि समानम् ॥ १० ॥

एकस्य सर्वात्मत्वे संसारदुःखित्वं परस्यैव तदिति प्राप्तमत इदमुच्यते-सूर्यो यथा चक्षुष आलोकेनोपकारं कुर्वन्मूत्रपुरीषाद्यशुचिप्रकाशनेन तद्दर्शिनः सर्वलोकस्य चक्षुरपि सन्न लिप्यते चाक्षुषैरशुच्यादिदर्शननिमित्तैराध्यात्मिकैः पापदोषैर्बाह्यैश्चाशुच्यादिसंसर्गदोषैः । एकः संस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः । लोको ह्यविद्यया स्वात्मन्यध्यस्तया कामकर्मोद्भवं दुःखमनुभवति । न तु सा परमार्थतः स्वात्मनि । यथा रज्जुशुक्तिकोषरगगनेषु सर्परजतोदकमलानि न रज्ज्वादीनां स्वतो दोषरूपाणि सन्ति । संसर्गिणि विपरीतबुद्धयध्यासनिमित्तात्तद्दोषवद्विभाव्यन्ते । न तद्दोषैस्तेषां लेपो विपरीतबुद्धयध्यासबाह्या हि ते । तथात्मनि सर्वो लोकः क्रियाकारकफलात्मकं विज्ञानं सर्पादिस्थानीयं विपरीतमध्यस्य तन्निमित्तं जन्ममरणादिदुःखमनुभवति न त्वात्मा सर्वलोकात्मापि सन्विपरीताध्यारोपनिमित्तेन लिप्यते लोकदुःखेन । कुतः । बाह्यो रज्ज्वादिवदेव विपरीतबुद्धयध्यासबाह्यो हि स इति ॥ ११ ॥

[प्रकाशिका] करणाय पुनरप्युपदिशति यथैकस्तेजोधातुस्त्रिवृत्करणकृतव्याप्त्याण्डान्तर्गतलोके प्रविष्टः सन्रूपं रूपं रूपे रूपे भौतिकव्यक्तिषु वीप्सायां द्विर्वचनम् । प्रतिरूपं प्रत्युप्तं रूपं यस्य स तथोक्तः । सर्वासु भौतिकव्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिसंक्रान्तरूपत्वात्प्रतिरूपमस्तीति द्रष्टव्यम् । तथैक एव सन्परमात्मा प्रतिवस्तुसंक्रान्तान्तर्यामिविग्रहो बहिश्च व्याप्नोतीत्यर्थः ९

उदाहरणान्तरमाह—पूर्ववत् ॥ १० ॥

आत्मत्वाविशेषेऽपि जीवात्मवद्दोषाः परमात्मनि न भवन्तीत्येतत्सदृष्टान्तमाह—“ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः ” बृ. ५।५।२ “ आदित्यश्चक्षु-

**एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् १२**
**नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्**

[शांकरभाष्यम्] किंच—स हि परमेश्वरः सर्वगतः स्वतन्त्र एको न तत्समोऽभ्यधिको वान्योऽस्ति । वशी सर्वं ह्यस्य जगद्वशे वर्तते । कुतः । सर्वभूतान्तरात्मा । यत एकमेव सदेकरसमात्मानं विशुद्धविज्ञानरूपं नामरूपाद्यशुद्धोपाधिभेदवशेन बहुधानेकप्रकारं यः करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात् । तमात्मस्थं स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत् । न हि शरीरस्याधारत्वमात्मनः । आकाशवदमूर्तत्वात् । आदर्शस्थं मुखमिति यद्वत् । तमेतमीश्वरमात्मानं ये निवृत्तबाह्यवृत्तयोऽनुपश्यन्ति आचार्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवेकिनस्तेषां परमेश्वरभूतानां शाश्वतं नित्यं सुखमात्मानन्दलक्षणं भवति नेतरेषां बाह्यासक्तबुद्धीनामविवेकिनां स्वात्मभूतमप्यविद्याव्यवधानात् ॥ १२ ॥

किंच—नित्योऽविनाश्यनित्यानां विनाशिनाम् । चेतनश्चेतनानां चेतयितॄणां ब्रह्मादीनां प्राणिनामग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्य-

[प्रकाशिका] भूत्वाक्षिणी प्राविशत् " ऐ. अ. १ ख.२ इति श्रुत्यनुसारेण यथा सूर्यश्चक्षुराधिष्ठातृतया तदन्तर्गतोऽपि बहिर्निर्गतैश्चक्षुर्मलादिभिर्न स्पृश्यते तथा परमात्मा सर्वभूतेष्वात्मतया वर्तमानोऽपि तद्गतैर्दोषैर्न स्पृश्यते । तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तबाह्यत्वात् । विलक्षणत्वादित्यर्थः ॥ ११ ॥

एकः समाभ्यधिकरहितः । वश इच्छा सोऽस्यास्तीति वशी जगद्वशे वर्तत इत्युक्तरीत्या वशवर्तिप्रपञ्चक इत्यर्थः । "इमौ स्म मुनिशार्दूल किंकरौ समुपस्थितौ । " इत्युक्तरीत्या भक्तवश्य इति वार्थः । एकं बीजं तमः " परे देवे मनस्येकी भवति " प्र. ४।२ इति श्रुत्युक्तरीत्या स्वेनैकीभूताविभागावस्थं तमोलक्षणं बीजं महदादिबहुविधप्रपञ्चरूपेण यः करोति तं य आत्मनि तिष्ठन्नित्युक्तरीत्या स्वान्तर्यामिणं ये पश्यन्ति तेषामेव मुक्तिरित्यर्थः ॥ १२ ॥

नित्यश्चेतन एक एव सन्बहूनां नित्यानां चेतनानामपेक्षितानर्थाननायासेन प्रयच्छति । स्पष्टोऽर्थः ॥ १३ ॥

**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ॥**
**कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥**
**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति १५**

**इति काठकोपनिषदि द्वितीयाध्याये द्वितीया वल्ली समाप्ता ॥२॥(५)**

[ शांकरभाष्यम् ] निमित्तमेव चेतायितृत्वमन्येषाम् । किंच स सर्वज्ञः सर्वेश्वरः कामिनां संसारिणां कर्मानुरूपं कामान्कर्मफलानि स्वानुग्रहनिमित्तांश्च कामान्य एको बहूनामनेकेषामनायासेन विदधाति प्रयच्छतीत्येतत् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम् ॥ १३ ॥

यत्तदात्मविज्ञानं सुखमनिर्देश्यं निर्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते यत्तदेतत्प्रत्यक्षमेवेति मन्यन्ते, कथं नु केन प्रकारेण तत्सुखमहं विजानीयाम् । इदमित्यात्मबुद्धिविषयमापादयेयं यथा निवृत्तैषणा यतयः । किमु तद्भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति विस्पष्टं दृश्यते किंवा नेति ॥ १४ ॥

अत्रोत्तरमिदं भाति च विभाति चेति । कथम्—न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः । तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमस्मद्दृष्टिगोचरोऽग्निः । किं बहुना यदिदमादित्यादिकं सर्वं भाति तत्तमेव परमेश्वरं भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा जलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनु दहति न स्वतस्तद्वत् । तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च । कार्यगतेन विविधेन भासा तस्य

[ प्रकाशिका ] एवमुक्ते शिष्य आह—तदलौकिकं परमानन्दरूपं ब्रह्म करतलामलकवदपरोक्षं भवादृशा निष्पन्नयोगा मन्यन्ते । भवादृशाः साक्षात्कर्तुं शक्नुवन्तीत्यर्थः । कथं रूपादिहीनब्रह्मग्रहणासमर्थमानसोऽहं विजानीयाम् । तत्किं दीप्तिमत्तया भासते तत्रापि विस्पष्टं प्रकाशते । उत तेजोऽन्तरसंवलनान्न विस्पष्टं प्रकाशत इति प्रश्नः ॥ १४ ॥

परमात्मनो योगयुगालम्बनाय "आदित्यवर्णं तमसः परस्तात्" श्वे. ३।८ सदैकरूपरूपायेति प्रमाणप्रतिपन्नगुहाश्रयदिव्यमङ्गलविग्रहोऽस्ति तद्विशिष्टः परमात्मा विभाति सर्वातिशायिदीप्तिमानित्याह । अयं च मन्त्रः

[शांकरभाष्यम्] ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्यम्। घटादीनामन्यावभासकत्वादर्शनाद्भासनरूपाणां चादित्यादीनां तद्दर्शनात् ॥ १९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशङ्करभगवतः कृतौ काठकोपनिषद्भाष्ये द्वितीयाध्याये द्वितीया वल्ली समाप्ता ॥ २ ॥ ( ५ )

[प्रकाशिका] " ज्योतिर्दर्शनात् " ब्र. सू. १।३।४० इति सूत्रे सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यत इति भाष्येण विवृतः। इदं च भाष्यम् । न तत्र सूर्य इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह—सर्वतेजसां छादकमिति उत्तरार्धस्य पूर्वपादार्थमाह—सर्वतेजसां कारणभूतमिति । अनुभानं पश्चाद्भानं तेन कार्यकारणभावः सिद्धः । पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः । चतुर्थपादार्थमाह—अनुग्राहकमिति । " यस्यादित्यो भामुपयुज्य भाति " इत्यादिश्रुतिश्चानुग्राहकत्वे प्रमाणमिति व्यासार्यैर्विवृतम् । तदीयदीप्तिसाक्षात्कारसंभवे तेजोऽन्तराणामभिभूतत्वं प्रथमार्धार्थः । तेजोन्तरोत्पत्तौ तदुपादानद्रव्यानुग्राहकत्वरूपं निमित्तत्वं तृतीयपादार्थः । चाक्षुषरश्म्यनुग्राहकचन्द्रादेरिवोत्पन्नस्यापि तेजसः स्वसंबन्धेन स्वकार्यकरणसामर्थ्याधायकत्वलक्षणानुग्राहकत्वं चतुर्थपादार्थ इत्यप्यर्थस्तत्रैव व्यक्तः । अधिष्ठानब्रह्मरूपभानव्यतिरिक्तभानशून्यत्वमध्यस्तप्रपञ्चस्य तृतीयपादार्थ इति परैरुच्यते तदयुक्तम् । तथा हि सति भान्तमिति कर्त्रर्थशतृप्रत्ययस्य शिष्यज्ञानं प्रकाशत इतिवदभेदेऽपि कथंचित्संभवेऽप्यनुभातीत्यनुशब्दस्यायोगात्। नहि देवदत्तगमनक्रियाव्यतिरिक्तगमनक्रियाशून्ये तिष्ठति यज्ञदत्ते गच्छन्तं देवदत्तं यज्ञदत्तोऽनुगच्छतीति प्रयोगो दृष्टचरः । ननु वह्निमेव दहन्तमयोऽनुदहतीति प्रयोगो दृष्टचर इति चेन्न । अयसः पृथग्दग्धृत्वाभावं निश्चितवतस्तत्प्रतिपिपादयिषया तादृशप्रयोगस्य संप्रतिपन्नत्वाभावात् । ननु तदीयदीप्तिसाक्षात्कारसंभवे तेजोऽन्तराणामभिभूतत्वमिति भवदभिमतार्थोऽपि न युज्यते । तदीयदीप्तिसाक्षात्कारवतामपि मुक्तानां तेजोऽन्तर्दीप्तिसाक्षात्कारदर्शनेन सजातीयसंवलनाधीनाग्रहणलक्षणाभिभवस्याभावादिति चेदुच्यते । बद्धविषयमेवैतत् । बद्धानां तत्साक्षात्काराप्रसक्तेरिदं कथमिति चेन्न । बद्धानामेवार्जुनादीनां तत्साक्षात्कारदर्शनात् । यद्वा कालिदासकवौ परिगण्यमान इतरः कुकविर-

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ॥
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥१॥

[शांकरभाष्यम्] तूलावधारणेनैव मूलावधारणं वृक्षस्य क्रियते लोके यथैवं संसारकार्यवृक्षावधारणेन तन्मूलस्य ब्रह्मणः स्वरूपावदिधारयिषयेयं षष्ठी वल्ल्यारभ्यते--उर्ध्वमूल ऊर्ध्वं मूलं यत्तद्विष्णोः परमं पदमस्येति सोऽयमव्यक्तादिस्थावरान्तः संसारवृक्ष ऊर्ध्वमूलः। वृक्षश्च व्रश्चनात्। जन्मजरामरणशोकाद्यनेकानर्थात्मकः प्रतिक्षणमन्यथास्वभावो मायामरीच्युदकगन्धर्वनगरादिवद्दृष्टनष्टस्वरूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारोऽनेकशतपाखण्डबुद्धिविकल्पास्पदस्तत्त्वविजिज्ञासुभिरनिर्धारितेदंतत्त्वो वेदान्तनिर्धारितपरब्रह्ममूलसारोऽविद्याकामकर्माव्यक्तबीजप्रभवोऽपरब्रह्मविज्ञानाक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः सर्वप्राणिलिङ्गभेदस्कन्धतृष्णाजलासेकोद्भूतदर्पो

[प्रकाशिका] कविरिरितिवद्भाति। ब्रह्मणि परिगण्यमाने सूर्यादितेजोऽन्तरं न भाति। अतस्तदेव ब्रह्मातिभास्वररूपशालीति पूर्वार्धार्थः। तदीयदीप्तिसाक्षात्कारसंभवे तेजोऽन्तराणामभिभूतत्वमिति व्यासार्यवचनस्याप्ययमेवार्थः। अमुमेवार्थमितरतेजसां स्वरूपोत्पत्तौ फलजनने च परमात्मानुग्रहसापेक्षत्वप्रदर्शकेन तमेव भान्तमित्युत्तरार्धेन प्रथयतीति न दोष इत्येतदवगन्तव्यम्। यद्वा पूर्वार्धस्य यथाश्रुत एवार्थः। नन्वतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने न भातीति प्रत्यक्षविरुद्धं कथमभिधीयत इत्यत्राह "तमेव भान्तमनुभाति" इति। इदं च परिदृश्यमानमादित्यादीनां भास्वररूपं न स्वाभाविकमपि तु परमात्मदत्तं तदीयमेव तेजः। गीतं च भगवता—— "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" भ. गी. अ. १५।१२ इति विवृत्तं चैतद्भगवता भाष्यकृता—अखिलजगतो भासकमेतेषामादित्यादीनां यत्तेजस्तन्मदीयं तेजस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धीति अतो याचितकमण्डितपुरुषतुल्यानामेतेषां भास्वररूपशालिनां न भातीति व्यपदेशो युज्यत इति भावः॥१५॥

द्वितीया वल्ली समाप्ता।

अयं च मन्त्रखण्ड ऊर्ध्वमूलमधःशाखमिति गीताव्याख्यानावसरे भगवता भाष्यकृता व्याख्यातः। इत्थं हि तत्र भाष्यम्—यं संसाराख्यमश्वत्थमूर्ध्वमूलमधःशाखमव्ययमश्वत्थं प्राहुः श्रुतयः। "ऊर्ध्वमूलोऽवा-

**यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् ।**
**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥**

[शांकरभाष्यम्] बुद्धीन्द्रियविषयप्रवालाङ्कुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशो यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसः प्राण्युपजीव्यानन्तफलस्तत्तृष्णासलिलावसेकप्ररूढजडीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताकृष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमुलीभूतमहारवो वेदान्तविहितब्रह्मात्मदर्शनासङ्गशस्त्रकृतोच्छेद एष संसारवृक्षोऽश्वत्थोऽश्वत्थवत्कामकर्मवातेरितनित्यप्रचलितस्वभावः । स्वर्गनरकतिर्यक्प्रेतादिभिः शाखाभिरवाक्शाखः । सनातनोऽनादित्वाच्चिरं प्रवृत्तः । यदस्य संसारवृक्षस्य मूलं तदेव शुक्रं शुभ्रं शुद्धं ज्योतिष्मच्चैतन्यात्मज्योतिःस्वभावं तदेव ब्रह्म सर्वमहत्त्वात्। तदेवामृतमविनाशस्वभावमुच्यते कथ्यते सत्यत्वात्। वाचारम्भणं विकारो नामधेयमनृतमन्यदतो मर्त्यम् । तस्मिन्परमार्थसत्ये ब्रह्मणि लोका गन्धर्वनगरमरीच्युदकमायासमाः परमार्थदर्शनाभावावगमनाः श्रिता आश्रिताः सर्वे समस्ता उत्पत्तिस्थितिलयेषु । तदु तद्ब्रह्म नात्येति नातिवर्तते मृदादिमिव घटादिकार्यं कश्चन कश्चिदपि विकारः। एतद्वै तत् ॥१॥

यद्विज्ञानादमृता भवन्तीत्युच्यते जगतो मूलं तदेव नास्ति ब्रह्मासत एवेदं निःसृतमिति तन्न । यदिदं किंच यत्किंचेदं जगत्सर्वं प्राणे परस्मिन्ब्रह्मणि सत्येजति कम्पते तत एव निःसृतं निर्गतं सत्प्रचलति नियमेन चेष्टते । यदेवं जगदुत्पत्त्यादिकारणं ब्रह्म तन्महद्भयम् । महच्च तद्भयं च बिभेत्यस्मादिति महद्भयम् । वज्रमुद्यतमुद्यतमिव वज्रम् । यथा वज्रोद्यतकरं स्वामिनमभिमुखीभूतं दृष्ट्वा भृत्या नियमेन तच्छासने वर्तन्ते तथेदं चन्द्रादित्यग्रहनक्षत्रतारकादिलक्षणं जगत्सेश्वरं नियमेन क्षणमप्यविश्रान्तं वर्तत इत्युक्तं भवति । य एतद्विदुः स्वात्मप्रवृत्तिसाक्षिभूतमेकं ब्रह्मामृता अमरणधर्माणस्ते भवन्ति ॥ २ ॥

[प्रकाशिका] क्शाख एषोऽश्वत्थः सनातनः"।"ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति " इत्याद्याः । सप्तलोकोपरिनिविष्टचतुर्मुखस्यादित्वेन तस्योर्ध्वमूलत्वं पृथिवीनिवासिसकलनरपशुमृगकृमिकीटपतङ्गस्थावरान्ततयाधःशाखत्वमिति । तल्लक्षणमेव ब्रह्मेति दर्शयति । पूर्वमेव व्याकृतोऽयं मन्त्रः ॥ १ ॥

अयं मन्त्रः " कम्पनात् " ब्र. सू. १।३।३९इति सूत्रे भगवता भाष्य-

**भयादस्याग्निस्तपति भयात्तपति सूर्यः ॥**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥**
**इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ।**
**ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥**

[ **शांकरभाष्यम्** ] कथं तद्भयाज्जगद्वर्तत इत्याह—भयाद्भीत्या परमेश्वरस्याग्निस्तपति भयात्तपति सूर्यो भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः । न हीश्वराणां लोकपालानां समर्थानां सतां नियन्ता चेद्वज्रोद्यतकरवन्न स्यात्स्वामिभयभीतानामिव भृत्यानां नियता प्रवृत्तिरुपपद्यते ॥ ३ ॥

तच्चेह जीवन्नेव चेद्यद्यशकच्छक्नोति शक्तः सञ्ज्ञानात्येतद्भयकारणं ब्रह्म बोद्धुमवगन्तुं प्राक्पूर्वं शरीरस्य विस्रसोऽवस्रंसनात्पतनात्संसारबन्धनाद्विमुच्यते । न चेदशकद्बोद्धुं ततोऽनवबोधात्सर्गेषु सृज्यन्ते येषु स्रष्टव्याः प्राणिन इति सर्गाः पृथिव्यादयो लोकास्तेषु सर्गेषु लोकेषु शरीरत्वाय

[ **प्रकाशिका** ] कृता व्याख्यातः । तत्रामुं मन्त्रं प्रस्तुत्य कृत्स्नस्य जगतोऽस्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निःसृतानां तस्मात्संजातमहाभयनिमित्तमेजनं कम्पनं श्रूयते तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः । भयादस्याग्निस्तपतीत्यादिनैकार्थ्यान्महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमेति । विवृतं चैतच्छ्रुतप्रकाशिकायाम् । प्राण इति सप्तम्यन्तपदसामर्थ्यात् । स्थितानामित्यध्याहारः । कुतो निःसृतानामित्यपेक्षायां प्रकृतस्यैवोपादानत्वमाह—तत इति । एजनं कम्पनमिति । एजृ कम्पन इति हि धातुः । प्रत्यवायभयात्स्वस्वकार्यप्रवृत्तिः कम्पनम् । उद्यतवज्रादिव परमपुरुषात्संजातेन भयेन कृत्स्नं जगत्कम्पत इत्यर्थ इति । अत्र महद्भयं वज्रमुद्यतमिति चत्वारि पदानि पञ्चम्यर्थे प्रथमान्तानि । आद्यं पञ्चम्यर्थपदद्वयं भयवाचि । उत्तरं तु पदद्वयं तद्धेतुभूतप्राणशब्दितपरब्रह्मपरमिति द्रष्टव्यम् । केचित्तु बिभेत्यस्मादिति भयं भयानकमित्यर्थः । महाभयानकोद्यतवज्रवत्स्वस्मान्निःसृतं सकलं जगत्प्राणशब्दितः परमात्मा कम्पयति । एजतिर्ण्यर्थगर्भ इत्यमुमर्थं वर्णयन्ति । स्पष्टोऽर्थः । " अत एव प्राणः" ब्र. सू. १।१।२३ इत्यधिकरणन्यायात्प्राणशब्दस्य परमात्मपरत्वे न विवाद इति द्रष्टव्यम् ॥ २ ॥

धावतिशब्द इन्द्रादीनां स्वस्वव्यापारप्रवृत्तिपरः । शिष्टं स्पष्टम् ॥ ३ ॥

शरीरस्य विस्रसो विस्रंसनात्पतनात्प्रागिह लोके ब्रह्म बोद्धुमशकच्चेच्छ-

**यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके ।**
**यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके।**
**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।**

[शांकरभाष्यम्] शरीरभावाय कल्पते समर्थो भवति शरीरं गृह्णातीत्यर्थः । तस्माच्छरीरविस्रंसनात्प्रागात्मबोधाय यत्न आस्थेयः ॥ ४ ॥

यस्मादिहैवात्मनो दर्शनमादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते न लोकान्तरेषु ब्रह्मलोकादन्यत्र । स च दुष्प्रापः । कथमित्युच्यते—यथादर्शे प्रतिबिम्बभूतमात्मानं पश्यति लोकोऽत्यन्तविविक्तं तथेहात्मनि स्वबुद्धावादर्शवन्निर्मलीभूतायां विविक्तमात्मनो दर्शनं भवतीत्यर्थः । यथा स्वप्नेऽविविक्तं जाग्रद्वासनोद्भूतं तथा पितृलोकेऽविविक्तमेव दर्शनमात्मनः कर्मफलोपभोगासक्तत्वात् । यथा चाप्स्वविभक्तावयवमात्मरूपं परीव ददृशे परिदृश्यत इव तथा गन्धर्वलोकेऽविविक्तमेव दर्शनमात्मनः । एवं च लोकान्तरेष्वपि शास्त्रप्रामाण्यादवगम्यते । छायातपयोरिवात्यन्तविविक्तं ब्रह्मलोक एवैकस्मिन् । स च दुष्प्रापोऽत्यन्तविशिष्टकर्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनायेहैव यत्नः कर्तव्य इत्यभिप्रायः ॥ ५ ॥

[प्रकाशिका] क्नुवांश्चेत् । विकरणव्यत्ययश्छान्दसः । ततस्तस्माज्ज्ञानाभावाद्धेतोः सृज्यमानसर्वलोकेषु जन्म जरादिमत्त्वलक्षणशीर्यमाणत्वाय भवतीत्यर्थः। तस्माच्छरीरपातात्प्रागेवात्मज्ञानाय यतेतेति भावः ॥ ४ ॥

आत्मनो दुर्बोधत्वमाह—यथादर्शे चन्द्रिकाया अभावान्न स्पष्टः प्रतिभासस्तथेह लोक आत्मनीत्यर्थः । यद्वा यथादर्शे दर्पणे प्रतीयमानं वस्तु साक्षाद्दृष्टवस्तुवत्प्रत्यङ्मुखत्वादिकल्पितार्थानवरुद्धतया नोपलभ्यते तथेहात्मविषयिणी प्रतीतिरित्यर्थः । लोकान्तरेऽपि तथेत्याह—यथा स्वप्नदर्शनस्य जाग्रद्दर्शनवत्सम्यक्तया संशयादिविरोधितया पुनरनुसंधानयोग्यत्वाभावस्तथा पितृलोक इत्यर्थः । यथा जलान्तरस्थवस्तुनो नेतरवत्स्पष्टप्रकाशस्तद्वत्परिददृश इव न वस्तुतः परितो दृश्यत इत्यर्थः । गन्धर्वलोकेऽप्यापाततः प्रतीतिमात्रमित्यर्थः । यथा छायातपयोर्मिश्रणे शुद्धातपवर्तिपदार्थवन्नोपलम्भ एवं ब्रह्मलोकेऽपि न सम्यगुपलम्भः । अतो दुरधिगममात्मतत्त्वमिति भावः । यद्वा ब्रह्मलोके यद्यपि छायातपयोर्विविच्योपलम्भवदात्मानात्मस्वरूपयोर्विविच्योपलम्भः संभवति तथापि नात्रत्यानामात्मतत्त्वं सुलभमिति भावः ॥ ५ ॥

**पृथगुत्पद्यमानाना मत्वा धीरो न शोचति ॥ ६ ॥**
**इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।**
**सत्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥**
**अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।**

[ शांकरभाष्यम् ] कथमसौ बोद्धव्यः किं वा तदवबोधे प्रयोजनमित्युच्यते— इन्द्रियाणां श्रोत्रादीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्य आकाशादिभ्यः पृथगुत्पद्यमानानामत्यन्तविशुद्धात्केवलाच्चिन्मात्रात्मस्वरूपात्पृथग्भावं स्वभावविलक्षणात्मकतां तथा तेषामेवेन्द्रियाणामुदयास्तमयौ चोत्पत्तिप्रलयौ जाग्रत्स्वापावस्थापेक्षया नात्मन इति मत्वा ज्ञात्वा विवेकतो धीरो धीमान्न शोचति । आत्मनो नित्यैकस्वभावस्याव्यभिचाराच्छोककारणत्वानुपपत्तेः । तथा च श्रुत्यन्तरं "तरति शोकमात्मवित् " छा० ७।१।३ इति ॥६॥

यस्मादात्मन इन्द्रियाणां पृथग्भाव उक्तो नासौ बहिरधिगन्तव्यो यस्मात्प्रत्यगात्मा स सर्वस्य तत्कथमित्युच्यते—इन्द्रियेभ्यः परं मन इत्यादि । अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणम् । पूर्ववदन्यत् । सत्त्वशब्दाद्बुद्धिरिह ॥७॥

अव्यक्तात्तु परः पुरुषो व्यापको व्यापकस्याप्याकाशादेः सर्वस्य कारणत्वात् । अलिङ्गो लिङ्ग्यते गम्यते येन तल्लिङ्गं बुद्ध्यादि तदविद्यमानमस्येति सोऽयमलिङ्ग एव सर्वसंसारधर्मवर्जित इत्येतत् । यं ज्ञात्वाचार्यतः शास्त्रतश्च मुच्यते जन्तुरविद्यादिहृदयग्रन्थिभिर्जीवन्नेव पतितेऽपि शरीरेऽ-

[ प्रकाशिका ] पृथग्भूतानामुत्पद्यमानानामिन्द्रियाणाम् । इन्द्रियाणामित्येतद्देहादीनामप्युपलक्षणम् । उदयास्तमयौ च तत् । यदिति त्वव्ययं यावित्यर्थे । यावुत्पादविनाशौ यश्च परस्परवैलक्षण्यलक्षणपृथग्भावश्च तान्सर्वानिन्द्रियादिगतान्मत्वा धीरो न शोचतीत्यर्थः । परस्परवैलक्षण्योत्पादविनाशा ज्ञानैकाकारे नित्य आत्मनि न सन्तीति ज्ञात्वा न शोचतीत्यर्थः ॥६॥

देहाविविक्तप्रत्यगात्मज्ञानेऽपि भगवच्छरणागतिरेवोपाय इति पूर्वोक्ते शरणवरणमेव प्रतिपादयति—इन्द्रियेभ्य इत्येतदर्थानामप्युपलक्षणं " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः " का० १।३।१० इत्यनेनैकार्थ्यात् । सत्त्वशब्दो बुद्धिपरः " मनसस्तु परा बुद्धिः " का० १।३।१० इति पूर्वोक्तेः । अलिङ्गो लिङ्गागम्यः । परत्वं च वशीकार्यतायां विवक्षितम् । परस्य च वशीकरणं शरणागतिरेव । शिष्टं स्पष्टम् ॥ ७ ॥ ८ ॥

**यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥**
**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ॥**
**हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥**
**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**

[ शांकरभाष्यम् ] मृतत्वं च गच्छति । सोऽलिङ्गः परोऽव्यक्तात्पुरुष इति पूर्वेणैव संबन्धः॥८॥

कथं तर्ह्यलिङ्गस्य दर्शनमुपपद्यत इत्युच्यते—न संदृशे संदर्शनविषये न तिष्ठति प्रत्यगात्मनोऽस्य रूपम् । अतो न चक्षुषा सर्वेन्द्रियेण । चक्षुर्ग्रहणस्योपलक्षणार्थत्वात् । पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम् । कथं तर्हि तं पश्येदित्युच्यते—हृदा हृत्स्थया बुद्ध्या । मनीषा मनसः संकल्पादिरूपस्येष्टे नियन्तृत्वेनेति मनीट् तया हृदा मनीषाविकल्पयित्र्या । मनसा मननरूपेण सम्यग्दर्शनेन । अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत् । आत्मा ज्ञातुं शक्यत इति वाक्यशेषः । तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवन्ति ॥ ९ ॥

सा हृन्मनीट् कथं प्राप्यत इति तदर्थो योग उच्यते—यदा यस्मिन्काले स्वविषयेभ्यो निवर्तितान्यात्मन्येव पञ्च ज्ञानानि । ज्ञानार्थत्वाच्छ्रो-

[ प्रकाशिका ] अस्य रूपं स्वरूपं विग्रहो वा व्यापकत्वादेव संदर्शनविषयेऽभिमुखतया न तिष्ठतीत्यर्थः । अथवा दृश्यं नीलरूपादिकं नास्तीत्यर्थः । अत एव—( नेत्यादि ) स्पष्टोऽर्थः । अयमंशः " सर्वत्र प्रसिद्धोपदेशात् " ब्र०सू० १।२।१ इत्यत्र व्यासार्यैः, हृदेति भक्तिरुच्यते मनीषेति धृतिः । "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।" इति पूर्वार्धमेकरूपं पठित्वा "भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह ।" इति महाभारत उक्तम् । अभिक्लृप्तो ग्राह्य इति विवृतः । धृत्या च समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति साक्षात्करोति प्राप्नोतीत्यर्थः । " भक्त्या त्वनन्यया शक्यः " भ० गी० ११।५४ इत्यनेनैकार्थ्यादिति वेदार्थसंग्रहे प्रतिपादितम् । स्पष्टोऽर्थः ॥ ९ ॥

ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानानीन्द्रियाणीत्यर्थः । " सप्तगतेः " ब्र० सू० २।४।५ इत्यधिकरणे व्यासार्यैस्तथा व्याख्यातत्वात् । अध्यवसायोपेतं मन एव बुद्धिशब्देनोच्यते । अत एव तत्र भाष्यम् । अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत

**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥**
**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥**
**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।**

[शांकरभाष्यम्] त्रादीन्द्रियाणि ज्ञानान्युच्यन्ते । अवतिष्ठन्ते सह मनसा यदनुगतानि तेन संकल्पादिव्यावृत्तेनान्तःकरणेन । बुद्धिश्चाध्यवसायलक्षणा न विचेष्टति स्वव्यापारेषु न विचेष्टते न व्याप्रियते तामाहुः परमां गतिम् ॥ १० ॥

तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम् । सर्वानर्थसंयोगवियोगलक्षणा हीयमवस्था योगिनः । एतस्यां ह्यवस्थायामविद्याध्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा । स्थिरामिन्द्रियधारणां स्थिरामचलामिन्द्रियधारणां बाह्यान्तःकरणानां धारणमित्यर्थः । अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं यत्नवांस्तदा तस्मिन्काले यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि बुध्द्यादिचेष्टाभावे प्रमादसंभवोऽस्ति । तस्मात्प्रागेव बुध्द्यादिचेष्टोपरमादप्रमादो विधीयते । अथवा यदैवेन्द्रियाणां स्थिरा धारणा तदानीमेव निरङ्कुशमप्रमत्तत्वमित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति । कुतः । योगो हि यस्मात्प्रभवाप्ययावुपजनापायधर्मक इत्यर्थोऽतोऽपायपरिहारायाप्रमादः कर्तव्य इत्यभिप्रायः ॥ ११ ॥

बुद्ध्यादिचेष्टाविषयं चेद्ब्रह्मेदं तदिति विशेषतो गृह्येत बुध्द्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं नास्त्येव ब्रह्म । यद्धि करणगोचरं तदस्तीति प्रसिद्धं लोके विपरीतं चासदित्यतश्चानर्थको योगोऽनुपलभ्यमानत्वाद्वा नास्तीत्युपलब्धव्यं ब्रह्मेत्येवं प्राप्त इदमुच्यते । सत्यम्—नैव वाचा न मनसा न

[प्रकाशिका] इति । शरीरान्तःसंचरणं विहाय मोक्षार्थगमनं परमा गतिरिति तत्रैव स्पष्टम् ॥ १० ॥

तां पूर्वमन्त्रनिर्दिष्टां बाह्याभ्यन्तरकरणधारणां परमां गतिं योगमिति मन्यन्ते । उक्तं च व्यासार्यैः, परमा गतिर्योग इत्यर्थ इति । इन्द्रियाणां निर्व्यापारत्व एवावहितचित्तता भवति । चित्तावधानं किमर्थमित्यत्राह योगस्य प्रतिक्षणापायशालितयावधानमपेक्षितमिति भावः । यद्वा इष्टप्रभवानिष्टाप्ययलक्षणसर्वपुरुषार्थसाधनत्वाद्योगस्य तत्राप्रमत्ततया भवितव्यमित्यर्थः ॥ ११ ॥

स्पष्टोऽर्थः । प्राणवादे “ सप्तगतेर्विशेषितत्वाच्च ” ब्र०सू० २।४।५

**अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥**

**अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।**

[शांकरभाष्यम्] चक्षुषा नान्यैरपीन्द्रियैः प्राप्तुं शक्यत इत्यर्थः । तथापि सर्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वादस्त्येव कार्यप्रविलापनस्यास्तित्वनिष्ठत्वात् तथा हीदं कार्यं सूक्ष्मतारतम्यपारम्पर्येणानुगम्यमानं सद्बुद्धिनिष्ठामेवावगमयति । यदापि विषयप्रविलापनेन प्रविलाप्यमाना बुद्धिस्तदापि सा सत्प्रत्ययगर्भैव विलीयते । बुद्धिर्हि नः प्रमाणं सदसतोर्याथात्म्यावगमे । मूलं चेज्जगतो न स्यादसदन्वितमेवेदं कार्यमसदित्येवं गृह्येत न त्वेतदस्ति सत्सदित्येव तु गृह्यते । यथा मृदादिकार्यं घटादि मृदाद्यन्वितम् । तस्माज्जगतो मूलमात्मास्तीत्येवोपलब्धव्यः । कस्मात् । अस्तीति ब्रुवतोऽस्तित्ववादिन आगमार्थानुसारिणः श्रद्दधानादन्यत्र नास्तिकवादिनि नास्ति जगतो मूलमात्मा निरन्वयमेवेदं कार्यमभावान्तं प्रविलीयत इति मन्यमाने विपरीतदर्शिनि कथं तद्ब्रह्म तत्त्वत उपलभ्यते न कथंचनोपलभ्यत इत्यर्थः ॥ १२ ॥

तस्मादपोह्यासद्वादिपक्षमासुरमस्तीत्येवात्मोपलब्धव्यः सत्कार्यो बुद्ध्याद्युपाधिः । यदा तु तद्रहितोऽविक्रिय आत्मा कार्यं च कारणव्यतिरेकेण नास्ति " वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" छां.६।१।४ इति श्रुतेस्तदा तस्य निरुपाधिकस्यालिङ्गस्य सदसदादिप्रत्ययविषयत्ववर्जितस्यात्मनस्तत्त्वभावो भवति । तेन च रूपेणात्मोपलब्धव्य इत्यनुवर्तते । तत्रा-

[प्रकाशिका] इन्द्रियाणि सप्तैव " सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त " मु० २।१।८ इति सप्तानामेव परलोकगतिश्रवणात् । "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते " इति योगदशायामिन्द्रियाणां परिगणितत्वाच्च सप्तैवेति प्राप्त उच्यते । "हस्तादयस्तु स्थितेऽतो नैवं" ब्र० सू० २।४।६ शरीरे स्थित आदानादिलक्षणकार्योपयोगित्वाद्धस्तादयोऽपीन्द्रियाण्येव । अतो नैवम् । " दशेमे पुरुषे प्राणा आत्मैकादशः " बृ० ३।९।४ आत्मशब्देन मनोऽभिधीयते । " इन्द्रियाणि दशैकं च "। भ० गी० १३। ५ " एकादशं मनश्चात्र इति श्रुतिस्मृतिभ्यां न्यूनसंख्यावादा उपकारविशेषाभिप्रायाः । अधिकसंख्यावादाश्च मनोवृत्तिभेदादिति स्थितम् । अमुमेवार्थमुपपादयति—अस्तीति ब्रुवतः शब्दादन्यत्रेत्यर्थः । तस्योपनिषदेकगम्यत्वादित्यर्थः ॥ १२ ॥

तत्त्वं भावयतीति तत्त्वभावोऽन्तःकरणं तेन च परमात्मास्तीत्येवोप-

**अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥**
**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥**
**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।**

[ शांकरभाष्यम् ] प्युभयोः सोपाधिकनिरुपाधिकयोरस्तित्वतत्त्वभावयोः । निर्धारणार्था षष्ठी । पूर्वमस्तीत्येवोपलब्धस्यात्मनः सत्कार्योपाधिकृतास्तित्वप्रत्ययेनोपलब्धस्येत्यर्थः । पश्चात्प्रत्यस्तमितसर्वोपाधिरूप आत्मनस्तत्त्वभावो विदिताविदिताभ्यामन्योऽद्वयस्वभावो "नेति नेतीत्यस्थूलमनण्वह्रस्वमदृश्येऽनात्म्येऽनिलयने" बृ. ३।८।८ इत्यादिश्रुतिनिर्दिष्टः प्रसीदत्यभिमुखी भवति । आत्मप्रकाशनाय पूर्वमस्तीत्युपलब्धवत इत्येतत् ॥ १३॥

एवं परमार्थदर्शिनो यदा यस्मिन्काले सर्वे कामाः कामयितव्यस्यान्यस्याभावात्प्रमुच्यन्ते विशीर्यन्ते येऽस्य प्राक्प्रतिबोधाद्विदुषो हृदि बुद्धौ श्रिता आश्रिताः। बुद्धिर्हि कामानामाश्रयो नात्मा । "कामः संकल्पः" बृ.१।५।३ इत्यादिश्रुत्यन्तराच्च । अथ तदा मर्त्यः प्राक्प्रबोधादासीत्स प्रबोधोत्तरकालमविद्याकामकर्मलक्षणस्य मृत्योर्विनाशादमृतो भवति, गमनप्रयोजकस्य मृत्योर्विनाशाद्गमनानुपपत्तेरत्रेहैव प्रदीपनिर्वाणवत्सर्वबन्धनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः ॥ १४ ॥

कदा पुनः कामानां मूलतो विनाश इत्युच्यते—यदा सर्वे प्रभिद्यन्ते

[ प्रकाशिका ] लब्धव्यः । वेदान्तवाक्यैरस्तीत्युपलब्धस्य मनसाप्यस्तीत्येवं मनननिदिध्यासने कर्तव्ये इत्यर्थः । उभयोर्हेत्वोरुभाभ्यां शब्दमनोरूपाभ्यामस्तीत्येवोपलब्धस्य ज्ञातवतो भुक्ता ब्राह्मणा इतिवदयं निर्देशः । तत्त्वभावः प्रसीदति मनः प्रसन्नं भवति शान्तरागादिदोषं भवतीत्यर्थः॥ १३॥

कामादेर्विषयविषयकमनोरथा हृद्गता यदा शान्ता भवन्ति तदानन्तरमेवायमुपासकोऽमृतो भवति । विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरो भवतीत्यर्थः। अत्रैव ब्रह्मोपासनवेलायां ब्रह्मानुभवतीत्यर्थः । "समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य" ब्र०सू० ४।२।७ इत्यत्र भाष्यम्—अनुपोष्य शरीरेन्द्रियादिसंबन्धमदग्ध्वैव यदमृतत्वमुत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते तदुच्यते 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्येत्यर्थः । अत्र ब्रह्म समश्नुत इति चोपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्यभिप्राय इति ॥ १४॥

उक्तमेवार्थं सादरेणाभ्यसन्नुपदेष्टव्यांश एतावानेवेत्युपसंहरति—ग्रन्थयो

**अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥ १५ ॥**

**शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति विश्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥**

[शांकरभाष्यम्] भेदमुपयान्ति विनश्यन्ति हृदयस्य बुद्धेरिह जीवत एव ग्रन्थयो ग्रन्थिवद्दृढबन्धनरूपा अविद्याप्रत्यया इत्यर्थः। अहमिदं शरीरं ममेदं धनं सुखी दुःखी चाहमित्येवमादिलक्षणास्तद्विपरीतब्रह्मात्मप्रत्ययोपजननाद्ब्रह्मैवाहमस्म्यसंसारीति विनष्टेष्वविद्याग्रन्थिषु तन्निमित्ताः कामा मूलतो विनश्यन्ति। अथ मर्त्योऽमृतो भवत्येतावद्ध्येतावदेवैतावन्मात्रं नाधिकमस्तीत्याशङ्का कर्तव्या। अनुशासनमनुशिष्टिरुपदेशः सर्ववेदान्तानामिति वाक्यशेषः ॥ १५ ॥

निरस्ताशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसमस्ताविद्यादिग्रन्थेर्जीवत एव ब्रह्मभूतस्य विदुषो न गतिर्विद्यत इत्युक्तमत्र ब्रह्म समश्नुत इत्युक्तत्वात् "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति" बृ. ४।४।६ इति श्रुत्यन्तराच्च। ये पुनर्मन्दब्रह्मविदो विद्यान्तरशीलिनश्च ब्रह्मलोकभाजो ये च तद्विपरीताः संसारभाजस्तेषामेष गतिविशेष उच्यते प्रकृतोत्कृष्टब्रह्मविद्याफलस्तुतये। किंचान्यदग्निविद्या पृष्टा प्रत्युक्ता च। तस्याश्च फलप्राप्तिप्रकारो वक्तव्य इति मन्त्रारम्भः। तत्र—शतं च शतसंख्याका एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनिःसृता नाड्यः शिरास्तासां मध्ये मूर्धानं भित्त्वाभिनिःसृता निर्गता सुषुम्ना नाम। तयान्तकाले हृदय आत्मानं वशीकृत्य योजयेत्। तया नाड्योर्ध्वमुपर्यायन्गच्छन्नादित्यद्वारेणामृतत्वममरणधर्मत्वमापेक्षिकम्। "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति स्मृतेः। ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान्ब्रह्मलोकगतान्। विष्वङ्नानाविधगतयोऽन्या नाड्य उत्क्रमणे निमित्तं भवन्ति संसारप्रतिपत्त्यर्था एव भवन्तीत्यर्थः ॥ १६ ॥

[प्रकाशिका] ग्रन्थिवद्दुर्मोचा रागद्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः। एतावदनुशासनमनुशासनीयमुपासकस्य कर्तव्यत्वेनोपदेष्टव्यमेतावदेव। वक्ष्यमाणमूर्धन्यनाडीनिष्क्रमणार्चिरादिगमनादिकं न साधककृत्यं किंतूपासनप्रीतभगवत्कृत्यमिति भावः ॥ १५ ॥

विमुक्तश्च विमुच्यत इति पूर्वमुक्तम्। द्वितीयां परममुक्तिमाह—हृदयस्य प्रधाननाड्यः शतं चैका च सन्ति। तासां मध्य एका सुषुम्णाख्या ब्रह्मनाडी

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।**
**तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥**
**तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥**

[ शांकरभाष्यम् ] इदानीं सर्ववल्ल्यर्थोपसंहारार्थमाह—अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां संबन्धिनि हृदये संनिविष्टो यथाव्याख्यातस्तं स्वादात्मीयाच्छरीरात्प्रवृहेदुद्यच्छेन्निष्कर्षेत्पृथक्कुर्यादित्यर्थः । किमिवेत्युच्यते—मुञ्जादिवेषीकामन्तस्थां धैर्येणाप्रमादेन । तं शरीरान्निष्कृष्टं चिन्मात्रं विद्याद्विजानीयाच्छुक्रममृतं यथोक्तं ब्रह्मेति । द्विर्वचनमुपनिषत्परिसमाप्त्यर्थमितिशब्दश्च ॥ १७ ॥

[प्रकाशिका ] मूर्धानमभिनिःसृता । तया नाड्योर्ध्वं ब्रह्मलोकं गच्छन्देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकस्वस्वरूपाविर्भावलक्षणां मुक्तिं प्राप्नोति। अन्यास्तु नाड्यो विष्वगुत्क्रमणे नानाविधसंसारमार्गोत्क्रमणायोपयुज्यन्ते । विष्वग्वितता नाड्योऽन्योत्क्रमण उपयुज्यन्त इति व्यासार्यैर्व्याख्यातम् । इदं च वाक्यं भगवता बादरायणेनोत्क्रान्तिपादे चिन्तितम् । तथाहि—मूर्धन्यया शताधिकया नाड्या विदुषो गमनमन्याभिरविदुष इति नियमो नोपपद्यते । नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात् । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमित्येवं पूर्वपक्षे प्राप्ते । “ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्युनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया” ब्र०सू० ४।२।१७ इति सूत्रेण सिद्धान्तितं तस्य चायमर्थः । तदोको जीवस्य स्थानं हृदयमग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनं तेनाग्रज्वलनेन प्रकाशितद्वारो भवति । “ तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः ” बृ० ४।४।२ इति श्रुतेः । एतावद्विद्वदविद्वत्त्वसाधारणम् । विद्वांस्तु शताधिकया मूर्धन्ययैव नाड्योत्क्रामति । न चास्या नाड्या विदुषो दुर्विवेचत्वम्। विद्वान्हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्याद्विद्याशेषभूततयात्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति । ततस्तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते । प्रकृतमनुसरामः ॥ १६ ॥

स्पष्टोऽर्थः । यथा देवदत्तः स्वाच्छरीराद्विलक्षण इत्युक्ते यथा स्वशब्दः

**मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्।**
**ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥१८॥**
**सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ॥**

[शांकरभाष्यम्] विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसंहारोऽधुनोच्यते—मृत्युप्रोक्तां यथोक्तामेतां ब्रह्मविद्यां योगविधिं च कृत्स्नं समस्तं सोपकरणं सफलमित्येतत् । नाचिकेतो वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थः । किम् । ब्रह्मप्राप्तोऽभून्मुक्तोऽभवदित्यर्थः । कथम् । विद्याप्राप्त्या विरजो विगतधर्माधर्मो विमृत्युर्विगतकामाविद्यश्च सन्पूर्वमित्यर्थः । न केवलं नाचिकेत एवान्योऽपि नाचिकेतवदात्मविदध्यात्ममेव निरुपचरितं प्रत्यक्स्वरूपं प्राप्य तत्त्वमेवेत्यभिप्रायः । नान्यद्रूपमप्रत्यग्रूपम् । तदेवमध्यात्ममेवमुक्तप्रकारेण वेद विजानातीत्येवंवित्सोऽपि विरजः सन्ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्यशेषः॥ १८॥

शिष्याचार्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादनानिमित्तदोषप्रशमनार्थेयं शान्तिरुच्यते—सह नावावामवतु पालयतु विद्यास्वरूपप्रकाशनेन।

[प्रकाशिका] समभिव्याहृतदेवदत्तसंबन्धिपरामर्शी, एवं पूर्वनिर्दिष्टान्तरात्मसंबन्धिपरामर्शी स्वशब्दः । ततश्चायमर्थः । तं जनानामन्तरात्मानं तच्छरीरभूताज्जनशब्दिताच्चेतनात्प्रवृहोद्विविच्य जानीयात् । "जुष्टं यदा पश्यत्यन्यमीशम्" श्वे० ४।७ इति श्रुत्युक्तरीत्या धारकत्वनियन्तृत्वशेषत्वादिना विलक्षणं जानीयादित्यर्थः । मुञ्जात्तृणविशेषादिषीकां तन्मध्यवर्तिस्थूलतृणविशेषमिव धैर्येण ज्ञानकौशलेनेति पूर्वेणान्वयः । उक्तोऽर्थः । द्विर्वचनमुपदेशसमाप्त्यर्थम् ॥ १७ ॥

उपसंहरति—नचिकेतो मृत्युप्रोक्तामात्मविद्यां यदा पञ्चेत्याद्युक्तं योगविधिं च लब्ध्वा प्राप्य "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" छा० ८।३।४ इति श्रुत्युक्तरीत्या ब्रह्म प्राप्याविर्भूतगुणाष्टकोऽभूदित्यर्थः । अध्यात्मविद्यां योऽन्योऽपि वेत्ति सोऽप्येवमेव नचिकेता इव भवतीत्यर्थः ॥ १८ ॥

शिष्याचार्ययोः शास्त्रीयनियमातिलङ्घनकृतदोषप्रशमनार्थं शान्तिरुच्यते । स विद्याप्रकाशितः परमात्मा । हशब्दः प्रसिद्धौ । नौ शिष्याचार्याववतु स्वस्वरूपप्रकाशेन रक्षतु । विद्याप्रचयद्वारावां सहैव परिपालयतु । यद्वा विश्लेषमन्तरेणावां सहितावेव यथा स्याव तथा पालयत्वित्यर्थः । सनियमविद्याप्रदानेन विद्यायाः सामर्थ्यं निष्पादयावहै नियमाभावे विद्या निर्वीर्या

**तेजस्वि नावधीतमस्तु**

[ शांकरभाष्यम् ] कः स एव परमेश्वर उपनिषत्प्रकाशितः। किंच सह नौ भुनक्तु तत्फलप्रकाशनेन नौ पालयतु। सहैवावां विद्याकृतं वीर्यं सामर्थ्यं [प्रकाशिका] भवतीति भावः। नावावयोर्यदधीतं तत्तेजस्व्यस्तु। वीर्यवत्तरं भवत्वित्यर्थः। "यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति। तयोरेकतरः प्रैति विद्वेषं चाधिगच्छति॥" इतिस्मृत्युक्तरीत्याधर्माध्ययनाध्यापननिमित्तो द्वेष आवयोर्मा भूदित्यर्थः। त्रिर्वचनं दोषशान्त्यर्थम्। इयं चोपनिषद्भगवत्परैवेति भगवता बादरायणेन समन्वयाध्याये त्रिभिरधिकरणैर्निर्णीतम्। तत्र "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" क० १।२।२५ इतिवाक्ये ब्रह्मक्षत्रिययोरोदनत्वनिरूपणेन भोज्यत्वस्य वा भोग्यत्वस्य वा प्रतीतेस्तत्प्रतिसंबन्धी यस्येति षष्ठ्यन्तयच्छब्दनिर्दिष्टो भोक्ता जीव एव स्यात्परमात्मनो भोक्तृत्वासंभवादिति पूर्वपक्षं कृत्वा "अत्ता चराचरग्रहणात्" "प्रकरणाच्च" "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" "विशेषणाच्च" ब्र० सू० १।२।९।१०।११।१२ इति चतुर्भिः सूत्रैः सिद्धान्तः कृतस्तेषां चायमर्थः। उभे भवत ओदन इत्योदनप्रतिसंबन्धितया प्रतीयमानोऽत्ता परमात्मैव, ब्रह्मक्षत्रशब्दगृहीतनिखिलचराचरसंहर्तृत्वस्यात्र मन्त्रे प्रतिपादनात्। अत्र ब्रह्मक्षत्रशब्दयोर्निखिलचराचरलक्षकत्वप्रकार ओदनशब्दस्य विनाश्यत्वलक्षकत्वप्रकारश्चैतन्मन्त्रव्याख्यानावसरे दर्शितस्तत्रैवानुसंधेयः। "महान्तं विभुमात्मानम्" क० १।२।२२ इति प्रस्तुतत्वेन तस्य ब्रह्मप्रकरणमध्यगतत्वाच्च। ननु ऋतं पिबन्तावित्युत्तरमन्त्रे कर्मफलभोगान्वयिनोरेव प्रतिपादनात्परमात्मनश्च जीववत्कर्तृत्वेन वान्तःकरणवत्करणत्वेन वान्वयासंभवात्परमात्मप्रकरणमध्यगतत्वं नास्तीत्याशङ्क्योक्तं गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति। गुहां प्रविष्टौ जीवपरमात्मानावेव। तयोरेवास्मिन्प्रकरणे गुहाप्रवेशदर्शनात्। "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्" क. १।२।१२ इति परमात्मनो गुहाप्रवेशः श्रूयते "या प्राणेन संभवत्यदितिर्देवतामयी। गुहां प्रविश्य" क. २।१।७ इति जीवस्यापि गुहाप्रवेशो दृश्यते। अतो द्वयोरपि गुहाप्रवेशदर्शनात्तयोरेव पिबदपिबतोश्छत्रिन्यायेन ऋतं पिबन्ताविति निर्देशस्य संभवात्। ऋतं पिबन्ताविति मन्त्रेण न परमात्मप्रकरणविच्छेदः शक्यशङ्कः। विशेषणाच्च। अस्मिन्प्रकरणे "ब्रह्मजज्ञं देवमीड्यं विदित्वा" क. १।१।१७

**मा विद्विषावहै ॥ १९ ॥**

[ शांकरभाष्यम् ] करवावहै निष्पादयावहै । किंच तेजस्वि नौ तेजस्विनोरावयोर्यदधीतं तत्स्वधीतमस्तु। अथवा तेजस्वि नावावाभ्यां यदधीतं तदतीव

[ प्रकाशिका ] इति जीवपरयोरुपास्यत्वोपासकत्वादिना विशेषितत्वात्तयोरेवोपासनसौकर्यायैकाधिकरणस्थत्वप्रतिपादनार्थत्वादृतं पिबन्ताविति मन्त्रस्य जीवपरप्रतिपादकत्वमेव । अतो यस्य ब्रह्म च क्षत्रं चेति मन्त्रः परमात्मपर एवेति निर्णीतम् । तथा " अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते " क. २।१।१२ इति मन्त्रेऽङ्गुष्ठमात्रतया निर्दिश्यमानो जीव एव । अङ्गुष्ठमात्रत्वस्य जीवधर्मतया " प्राणाधिपः संचरति स्वकर्मभिः " श्वे. ५।७ " अङ्गुष्ठमात्रो रवितुल्यरूपः " श्वे. ५।८ " अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् । " म. भा. इति श्रुतिस्मृतिप्रसिद्धत्वादिति पूर्वपक्षं कृत्वा " शब्दादेव प्रमितः " " हृद्यपेक्षया तु मनुष्याधिकारत्वात् " ब्र. सू. १।३।२४।२५ " कम्पनात् " " ज्योतिर्दर्शनात् " ब्र. सू. १।३।३९।४० इति चतुर्भिः सूत्रैः सिद्धान्तः कृतस्तेषां चायमर्थः । अङ्गुष्ठप्रमितः परमात्मा शब्दादेव, ईशानो भूतभव्यस्येतीश्वरत्ववाचकेशानशब्दादेव । ननु कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—हृद्यपेक्षया तु मनुष्याधिकारत्वात् । हृदि हृदये परमात्मनो वर्तमानत्वात्तदपेक्षयाङ्गुष्ठमात्रत्वमुपपद्यते । न च खरतुरगादीनामङ्गुष्ठशून्यानां हृदयस्याङ्गुष्ठप्रमितत्वाभावात्तदन्तर्वर्तिनः परमात्मनः कथमङ्गुष्ठमात्रत्वमिति वाच्यम् । उपासनाविधायिशास्त्रस्य मनुष्याधिकारिकत्वात्तेषां चाङ्गुष्ठसंभवात्तद्धृदयवर्तिनः परमात्मनोऽङ्गुष्ठसमपरिमाणस्य हृदयावच्छेदनिबन्धाङ्गुष्ठप्रमितत्वे नानुपपत्तिः । " कम्पनात् " ब्र. सू. १।३।३९ यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतम् " क. २।३।२ इति समस्तप्राणिकम्पनहेतुभयहेतुत्वस्यास्मिन्नङ्गुष्ठप्रमित आम्नानात् । तस्य च परमात्मधर्मत्वस्य "भीषास्माद्वातः पवते" तै. २।८।१ इत्यादिश्रुतिप्रतिपन्नत्वादङ्गुष्ठप्रमितः परमात्मा । " ज्योतिर्दर्शनात् । " ब्र. सू. १।३।४० ' न तत्र सूर्यो भाति न चन्द्रतारकम्' क. २।२।१५ इत्यङ्गुष्ठप्रमिते सकलतेजश्छादकज्योतिःसंबन्धप्रतिपादनात्, तादृशज्योतिःसंबन्धस्याथर्वणे ब्रह्मसंबन्धितया प्रतिपादितत्वाच्चाङ्गुष्ठप्रमितः परमात्मेत्यर्थः । तथा " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु

ॐ शान्तिः शान्तिः शान्तिः ॥

[शांकरभाष्यम्] तेजस्वि वीर्यवदस्त्वित्यर्थः । मा विद्विषावहै शिष्याचार्यावन्योन्यं प्रमादकृतान्यायाध्ययनाध्यापनदोषनिमित्तं द्वेषं मा करवावहा इत्यर्थः।

[प्रकाशिका] परा बुद्धिर्बुद्धेरात्मा महान्परः" क. १।३।१०"महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः क. १।३।११ इति वाक्ये सांख्यप्रक्रियाप्रत्यभिज्ञानात्पञ्चविंशातिरिक्तपुरुषनिषेधाच्च सांख्याभिमतब्रह्मात्मकं प्रधानमेवाव्यक्तशब्देनाभिधीयत इति "अनुमानिकमप्येकेषामिति चेत्" इति सूत्रखण्डेन पूर्वपक्षं कृत्वा " शरीररूपकविन्यस्तगृहीतेर्दर्शयति च " ब्र. सू. १।४।१ " सूक्ष्मं तु तदर्हत्वात् " ब्र. सू. १।४।२ " तदधीनत्वादर्थवत् " ब्र. सू. १।४।३ " ज्ञेयत्वावचनाच्च " ब्र. सू. १।४।४ " वदतीति चेन्न प्राज्ञो हि प्रकरणात् " ब्र. सू. १।४।५ " त्रयाणामेव चैवमुपन्यासः प्रश्नश्च " ब्र. सू. १।४।६ " महद्वच्च " ब्र. सू. १।४।७ इति सप्तभिः सूत्रैः सिद्धान्तः कृतस्तेषां चायमर्थः । अनुमानिकं नाव्यक्तशब्दाभिलप्यम् । उपासनोपयोगिवशीकरणाय "आत्मानꣳ रथिनं विद्धि शरीरं रथमेव च" क.१।३।३ इतिवाक्ये रथरश्म्यादिभावेन रूपितेष्वात्मशरीरबुद्धिमनइन्द्रियविषयेषु रथरूपकात्मना शरीरं रथमेव चेति विन्यस्तस्य शरीरस्यैवाव्यक्तशब्देन ग्रहणसंभवात् । अस्मिंश्च प्रकरण इन्द्रियादिवशीकरणप्रकारस्यैव " यच्छेद्वाङ्मनसी प्राज्ञः"क० १।३।१३इत्यादौ दर्शनात्तदनुसारेणाव्यक्तशब्देन शरीरमेव गृह्यते । ननु कथमव्यक्तशब्देन व्यक्तस्य शरीरस्याभिधानं तत्राह—सूक्ष्मं तु तदर्हत्वात्। भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति । ततश्च कारणवाचिनाव्यक्तशब्देन स्थूलं शरीरमेवोपचारादुच्यत इत्यर्थः । ननूक्तशब्दस्य मुख्य एवार्थोऽस्तु । कुतः स्थूलशरीरे लक्षणाभ्युपगन्तव्येत्यत्राह—तदर्हत्वादिति । स्थूलशरीरस्यैव कार्यार्हत्वात्तस्यैव वशीकार्यत्वाय प्रतिपादनस्यापेक्षितत्वादव्यक्तशब्देन कारणवाचिना स्थूलशरीरलक्षणोचितेति भावः । ननु यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषस्तत्राह तदधीनत्वादर्थवत् । अस्मन्मतेऽव्यक्तस्य परमात्माधीनतया तदधिष्ठितत्वेन प्रयोजनवत्त्वमस्ति सांख्यमते तदनभ्युपगमात्तस्य निष्प्रयोजनत्वमिति भावः । ज्ञेयत्वावचनाच्च । यदि तन्त्रसिद्धमेवाविवक्षिष्यत्तदास्य ज्ञेयत्वमविवक्षिष्यत् । व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षं

**इति काठकोपनिषदि द्वितीयाध्याये तृतीया वल्ली समाप्ता ॥ ३ ॥ ( ६ )**

[ **शांकरभाष्यम्** ] शान्तिः शान्तिः शान्तिरिति त्रिर्वचनं सर्वदोषोपशमनार्थमित्योमिति ॥ १९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमदाचार्यश्रीशङ्करभगवतः कृतौ काठकोपनिषद्भाष्ये
द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

[ प्रकाशिका ] वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात् । न चास्य ज्ञेयत्वमुच्यते । अतो न तन्त्रसिद्धस्येह ग्रहणम् । वदतीति चेन्न प्राज्ञो हि प्रकरणात् । " अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" क.२।३।१५ इत्युक्तस्य ज्ञेयत्वमनन्तरमेव श्रुतिर्वदतीति चेन्न । सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम् । क. १।३।९ इति प्राज्ञस्य परमात्मनः प्रकरणात्स एवाशब्दमस्पर्शमिति मन्त्रे ज्ञेयत्वेन निर्दिश्यते न तन्त्रसिद्धमव्यक्तम् । त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । अस्मिन्प्रकरण उपायोपेयोपेतॄणां त्रयाणामेव ज्ञेयत्वोपन्यासः । अन्यत्र धर्मादन्यत्राधर्मादिति प्रश्नश्च दृश्यते नाव्यक्तादेः । महद्वच्च । यथा " बुद्धेरात्मा महान्परः " क. १।३।१० इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यत एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् । अत इयमुपनिषत्सर्वापि परमात्मपरेति त्रिभिरधिकरणैर्निर्णीतम् ॥ १९ ॥

इति श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौमश्रीमद्रङ्गरामानुज-
मुनिवरविरचितकाठकोपनिषत्प्रकाशिकायां द्वितीयाध्याये
तृतीया वल्ली समाप्ता ॥

**इति कठवल्लीप्रकाशिका समाप्ता ॥**

# इति परिसमाप्तेयं भाष्यद्वयोपेता काठकोपनिषत्.

---

१ क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः । वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥ १ ॥

॥ श्रीः ॥

# अथ कठोपनिषद्व्याख्याद्वये बालबोधिनी ।

**प्रणम्य शङ्करं साम्बं कठव्याख्याद्वये मया ।**
**छात्राणां सुखबोधाय क्रियते बालबोधिनी ॥ १ ॥**

अथ प्रथमाध्यायप्रथमवल्ली ॥ १।१।१

[शाङ्करभाष्यम्] ॐभूधरभूजानिर्विजयते । अथ भगवान् शङ्कराचार्यश्चिकीर्षितस्य भाष्यस्य निर्विघ्नपरिसमाप्तये यमनचिकेतोनमस्कारात्मकं मङ्गलमाचरति । तेन चाचार्यभक्तिर्विद्याप्राप्त्यङ्गमिति दर्शयति—**नम इत्यादिना** । ननु न यमो मृत्युर्नमस्कार्यो मारयतीति मृत्युरिति व्युत्पत्त्या सर्वप्राणिविघातकत्वेन दोषास्पदत्वात्तस्येत्याशङ्कां वारयति—**भगवत इति** । “ उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ १ ॥ ” इति स्मृतेर्यमस्य प्रत्यक्षीकृतब्रह्मतत्त्वस्य “ यावदधिकारमवस्थितिराधिकारिकाणाम् ” ब्र. सू. ३।३।३२ इति न्यायेन याम्ये पदे वर्तमानस्य नमस्कार्यता योग्यैव । चिकीर्षितं प्रतिजानीते—**अथेति** । **काठकोपनिषद्वल्लीनामिति** । अत्र हि संपरायविषयको मृत्युनचिकेतःसंवादः । ननु “ अत्ता चराचरग्रहणात् ” ब्र. सू. १।२।९ इत्यादिसूत्रैर्बादरायणेन विवृतोऽर्थ एतासां वल्लीनां तेनेदं भाष्यमकिञ्चित्करमित्यत आह—**सुखार्थप्रबोधनार्थमिति** । सुखयतीति सुखोऽनायासेन ज्ञायमानो योऽर्थस्तद्बोधनार्थम् । सूत्रद्वारा प्रतिपादित एतदर्थो मन्दमतिभिर्दुरूहो भवतीत्यतः स्वातंत्र्येण वृत्तिर्भाष्यरूपा क्रियते । ननु भर्तृप्रपंचादिभिः पूर्वैः कृतैव वृत्तिस्तयैव गतार्थतेत्यत आह—**अल्पग्रन्थेति**। भर्तृप्रपंचादिपूर्ववृत्तिषु ग्रन्थबाहुल्यमर्थाल्पत्वमत्र तु ग्रन्थाल्पत्वमर्थबाहुल्यमिति भावः । अधिकारिसम्बन्धविषयप्रयोजनानि द्योतयितुमुपनिषच्छब्दार्थमाह—**सदेर्धातोरिति** । ‘ षद्लृ विशरणगत्यवसादनेषु ’ इति धातुपाठात्पाणिनीयाद्विशरणगत्यवसादनेति त्र्यर्थकोऽयं धातुः । **क्विप्प्रत्ययान्तस्येति** । क्विप्प्रत्ययश्च सर्वापहारी । सर्वेषां तदवयवानामित्संज्ञालोपा-

भ्यामपहारात् । **केन पुनारिति** । उपनिषच्छब्दस्य विद्येति योऽर्थः स किं समुदायशक्त्यावयवशक्त्या वेति प्रश्नार्थः । अर्थयोगेन—अर्थसम्बधेन । **उच्यत इति** । समाधानम् । अवयवशक्त्योपनिषच्छब्दस्य विद्यायां वृत्तिरित्यर्थः । **दृष्टानुश्रविकेत्यादि** । दृष्टाः प्रत्यक्षा इहलोकस्थाः स्रक्चन्दनवनितादयः । आनुश्रविकाः "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यनुश्रवेण वेदेन ज्ञायमानाः पारलौकिकाः । एवं चोभयलोकजविषयेषु वितृष्णाः क्षयातिशयादिदोषदर्शनात्तत्रासक्तिरहिताः । उपसद्य—आचार्योपदेशाल्लब्ध्वा । **शीलयन्तीति** । साक्षात्कारपर्यन्तं जीवपरमात्मैक्यासंभावनाविपरीतभावनादिकं च निरस्यन्तीत्यर्थः । **निचाय्येति** । तं—आत्मानम् । निचाय्य—संशोध्य । **मृत्युमुखादिति** । जन्ममृत्युरूपसंसारादित्यर्थः । [ पृ. २ ] विशरणरूपमर्थं प्रदर्श्य गतिरूपमर्थमाह—**पूर्वोक्तेत्यादि** । **विरजोऽभूदिति** । अज्ञानरहित इत्यर्थः । अवसादनरूपमर्थं गृहीत्वोपनिषच्छब्दार्थमाह—**लोकादिरिति** । भूरादिलोकानामादिः प्रथमजः । ब्रह्मजज्ञः—ब्रह्मणो जातो ज्ञो ज्ञाता चेति विशेषणोभयपदः कर्मधारयः । **वक्ष्यतीति** । अस्यामेवोपनिषदि । स्वर्गलोकाः—यजमानाः । **अविद्यादीत्यादि** । अविद्याकामकर्मादयो ये संसारहेतवः । **तद्विशरणादेरिति** । आदिपदेन गत्यवसादयोर्ग्रहणम् । ग्रन्थमात्रे—केवलग्रन्थे । **तादर्थ्येनेति** । सोऽर्थः प्रयोजनं यस्य स तदर्थस्तस्य भावस्तादर्थ्यं तज्जनकत्वेनेति यावत् । **तच्छब्दोपपत्तेरिति** । स शब्द उपनिषदिति यस्य स तच्छब्दस्तस्य भावस्तच्छब्दत्वं तस्योपपत्तेः संभवादित्यर्थः । **आयुर्वै घृतमिति** । तज्जनके तच्छब्दस्य प्रयोगो भवतीत्यर्थेऽयं दृष्टान्तो वैदिकः । यथायुर्जनके घृत आयुरिति प्रयोगस्तद्वदिति दृष्टान्तार्थः । भक्त्या—लक्षणया । उपनिषच्छब्दप्रयोग इति शेषः । एवमर्थनिर्वचनेन सिद्धं ग्रन्थप्रवृत्तिसाधकमनुबन्धचतुष्टयमाह—**एवमित्यादि** । आत्यन्तिकी—मूलकारणनिवृत्तिपूर्वकं जायमाना । **सम्बन्धश्चेति** । ज्ञानादीनामिति शेषः । एवंभूतप्रयोजनेन—संसारनिवृत्त्यादिरूपप्रयोजनेन । **करतलेत्यादि** । वृक्षे विद्यमानस्यामलकीफलस्य तिर्यगादिरेषाज्ञानं न तादृशं प्रकटं भवति यथा करतले न्यस्तस्य तस्येति करतलन्यस्तेति दृष्टान्त उक्तम् । **यथाप्रतिभानमिति** । औद्धत्यनिराकरणार्थमियमुक्तिः । **विद्यास्तुत्यर्थेति** । अन्यच्छ्रूय इत्यारभ्योच्यमानायामुपनिषद्विद्यायां प्रवृत्तिहेतुत्वेनार्थवादरूपेयमाख्यायिका ततो

व्याख्यानमर्हतीति भावः। **उशन्निति**। 'वश् कान्तौ' इति धातोः शत्रन्तस्य रूपम्। वृत्तार्थस्मरणार्थौ—भूतार्थस्य स्मारकौ। **रूढितो वेति**। अथवावयवार्थनिरपेक्षं रूढमेव वाजश्रवा इति नाम ग्राह्यमित्यर्थः। सर्व-मेधेन—सर्वस्वदक्षिणाकेन ॥ १ ॥

[ प्रकाशिका ] अथ श्रीरङ्गरामानुजाचार्यः स्वकृतकठोपनिषद्व्याख्या विशिष्टाद्वैतमतस्य प्रतिपादयितृभ्यो रामानुजाचार्येभ्यो रोचतामिति तत्स्म-रणात्मकं श्लोकमारचयति—**क्षेमायेति**। उदारो महामनस्को यो रामानु-जाचार्यः करुणया क्षितिनिर्जराणां भूदेवानां ब्राह्मणानां क्षेमाय कल्याणाय भाष्यसुधां श्रीभाष्यरूपममृतं भूमौ पृथ्वीतले व्यजृम्भयत विस्तारयामास। अमृतं स्वर्गे देवानां कल्याणं विदधाति। इदं श्रीभाष्यामृतं त्वधिकारिणां ब्राह्मणानां सन्मार्गप्रदर्शनेन भूमावपि कल्याणमारचयति। किंच यो वामागमा-ध्वगवदावदतूलवातः—वामाः कुटिलाश्च त आगमाः शास्त्रसिद्धान्ता अद्वै-तादयस्तद्रूपेणाध्वना मार्गेण ये गच्छन्ति तादृशा ये वदावदा वावदूका-स्तादृशान्वामाञ् शास्त्रविधुरानपि सिद्धान्तान्ये व्याख्यानपाटवेन प्रतिपाद-यन्ति तादृशवादिरूपो यस्तूलः कार्पासस्तद्धूननाय तत्कम्पनाय वातरूपः। तूलं वात इव दुर्वादव्याख्यानकौशलं यो धूनयति खण्डयति स रामानुजो मुनिर्मदुक्तिं कठोपनिषद्व्याख्यानरूपामाद्रियतां स्वीकरोतु। एतया व्याख्य-या स प्रसीदत्वित्यर्थः ॥ १ ॥

एवं रामानुजाचार्यं स्मृत्वा स्वाराध्यं हनूमन्तं नमस्कर्तुमाह—**अतसी-गुच्छसच्छायमिति**। अतसीसंज्ञकपुष्पस्तबकसमानकान्तिम्। अञ्चितो-रस्थलं—भूषितोरस्कम्। **अञ्जनाचलशृङ्गारमिति**। अञ्जना हनूमज्ज-ननी तन्निवासस्थानत्वात्तदाख्यया प्रथितस्याञ्जनागिरेः शृङ्गारं भूषणभूतं हनूमन्तं ममाञ्जलिर्गाहतां तस्मै हनूमते नम इत्यर्थः ॥ २ ॥

अधुना व्यासादीन्नमस्कृत्य कठवल्लीव्याख्यानं प्रतिजानीते—**व्यासमिति**। लक्ष्मणयोगीन्द्रं—रामानुजम् ॥ ३ ॥

[पृ.२] **काम्यत्वादिति**। काम्यकर्मणि दक्षिणादिभिः सर्वैरङ्गैर्यथाशास्त्रं भ-वितव्यम्। कामनाभावे कस्यचिदङ्गस्य न्यूनत्वेऽपि न क्षतिरित्यर्थः। **दक्षि-णासाद्गुण्यमिति**। सन्गुणो यस्य स सद्गुणः। तस्य भावः साद्गुण्यं दक्षि-णया साद्गुण्यमिति विग्रहः। **इत्यादिवादिति**। स्वस्तये तार्क्ष्यमित्यादि-वाक्ये यथा लिङन्तस्यासुधातोर्भूभावो भ्वादेशो न तथात्रापीत्यर्थः। यत

का.--१३

आर्धधातुकाधिकारे भूरूपादेशो विहितोऽत्र तु " छन्दस्युभयथा " पा.सू. ६।४।९ इत्यनेन वैकल्पिकं सार्वधातुकत्वं तेनात्र भूरूपादेशेन बभूवेति रूपं न ॥ १ ॥

१ । १ । २

[शाङ्करभाष्यम्] [पृ. ३] **अप्राप्तप्रजननशक्तिमिति**। अप्राप्ता प्रजनने प्रजोत्पादने शक्तिर्येन तम् । **हितकामप्रयुक्तेति** । काम्यत इति कामः स्वर्गादिः हितो हितकृत्स चासौ कामश्चेति विशेषणोभयपदः कर्मधारयः । तेन प्रयुक्ता जनिता । जनकस्य स्वर्गादिप्राप्तिः कथं स्यादिति हितेच्छाप्रयुक्ता बुद्धिर्नचिकेतसः समुत्पन्नेत्यर्थः । उपनीयमानासु दीयमानासु ऋत्विक्सदस्येभ्यो दक्षिणारूपेण गोषु दीयमानासु तं श्रद्धाविवेशेत्यन्वयः ॥ २ ॥

[ प्रकाशिका ] [ पृ. ३ ] **यद्यपीति** । इयमत्र शङ्का—दक्षिणा नामानतिकरं द्रव्यम् । आनतिर्नाम भृत्या वेतनदानेन परिक्रीय ऋत्विजां वशीकारः। एवं चानत्यर्थं द्रव्यं कियत्परिमाणमपि भवतु तदेकवचनान्तेनैव दक्षिणाशब्देन वक्तव्यमानतिरूपोपाधेरेकत्वात् तत्रोपोद्बलकमत एवेत्यादिना प्रदर्श्यते—**भूनामकैकाहक्रताविति** । एकाहसाध्यः क्रतुरेकाहक्रतुः । ' अथैष भूः ' इति भूनामकमेकाहविशेषमुपक्रम्य ' तस्य धेनुर्दक्षिणा ' इति श्रूयते। अत्र संशयः। सेयं धेनुर्गोमात्रं प्रकृतं बाधत उत गवाश्वादिमाषपर्यन्तं सर्वं दक्षिणारूपं बाधत इति । तत्र सर्वं गवाश्वादिमाषान्तं दक्षिणासमूहं बाधत इति सिद्धान्तः कृतः । तत्र सिद्धान्तप्रदर्शनवेलायां जैमिनीयन्यायमालायां जैमिनिसूत्रशाबरभाष्यानुसारिभिर्माधवाचार्यैरित्थमुच्यते । "इयं धेनुरखिलां दक्षिणां बाधते कुतो गवाश्वादीनां माषान्तानां सर्वेषामेव दक्षिणारूपत्वात् 'दक्षिणा' इत्येकवचनमिह प्रयुज्यते। गौश्चेत्यादयः समुच्चयवाचिनश्चशब्दा एकत्व एवोपपद्यन्ते, आनतिश्चैवं सत्यत्यन्तसुलभा । यदि दक्षिणा भिद्येरंस्तदैकयैवानतिसिद्धेरितरासां वैयर्थ्यं दुर्वारम् । तस्मान्निखिलदक्षिणाबाधः ।" इति । एतच्चाधिकरणं त्रिसूत्रात्मकं तत्र प्रथमसूत्रं तस्य धेनुरित्यादि । गवादीनां माषान्तानां सर्वेषां दक्षिणेत्येकवचनान्तेनोक्त्या सर्वत्रैकवचनमेवापेक्ष्यतेऽत्र मन्त्रे दक्षिणास्विति बहुवचनान्तप्रयोगः कथमित्यर्थः । समाधत्ते—**तथापीति** । भृतिशब्दो वेतनवाची स चास्मिन्कर्मणीयं भृतिरिति कर्मापेक्षया यथा प्रवर्तते तथास्मिन्कर्मण्येषां पुरुषाणामियं भृतिरिति तत्तत्कर्मकर्तृविषयतयापि प्रवर्तते ततश्च कर्मापेक्षया प्रवर्तमानाया भृतेरेकवच-

नान्तदक्षिणाशब्देन पूर्वोक्तन्यायेनोक्तावपि कर्मणः कर्तॄणामृत्विजां बहुत्वात्तदपेक्षया प्रवर्तमानस्य भृतिशब्दस्य ‘ दक्षिणासु ’ इति बहुवचनान्ततया प्रयोगोऽपि नासंगतः । ऋत्विग्भेदापेक्षया दक्षिणाभेदो भवतीत्यत्रोपोद्बलकमाह–**अतएवेत्यादिना** । “ यदि ब्रह्मणस्तदूनं तद्विकारः स्यात् ” जै. सू. १०।३।७।१ इति सूत्रघटितं षट्सूत्रात्मकं यदधिकरणं तत्रिधा व्याख्यातं शबराचार्यैः । तत्र द्वितीयं यद्व्याख्यानं तदेकतापक्षमालम्ब्यात उच्यते–**एकवाक्यतापक्ष इति । अवयवलक्षणामन्तरेणेति** । षोडशानामृत्विजामन्यतमस्य ब्रह्मणो या दक्षिणेत्यवयवरूपलक्षणामकृत्वापि । ब्रह्मभागे मुख्यवृत्यैव सिद्धेः । **तन्मात्रबाध इति** । ब्रह्मसंबद्धदक्षिणांशस्य निवृत्तिः । अन्येषामृत्विजां विषये यद्यप्यवयवलक्षणा स्वीकृता तथापि ब्रह्माख्यस्य ऋत्विजः संबन्धिनि दक्षिणाशब्देऽवयवलक्षणामकृत्वाप्युपपत्तिरिति भावः । एकवाक्यतापक्षात्मकमिदमधिकरणं माधवाचार्यैरित्थं प्रदर्शितं जैमिनीयन्यायमालायाम्–“ पूर्वोक्तनिर्णयं पूर्वपक्षयित्वैकवाक्यताम् । भ्रान्त्या कृत्वा दक्षिणांशं ब्रह्मभागं निवर्तयेत् ॥ श्यावाश्वाधिकरणे ‘ रुक्मललाटो दक्षिणा ’ इत्यस्य स ब्रह्मणे देय इत्यस्य चान्तराले स ह्यनिरुक्त इति वाक्यान्तरं पठितम् । तेन व्यवधानाद्विस्पष्टो वाक्यभेदः । इह त्वव्यवधानादेकं वाक्यमिति भ्रान्तिः । एकवाक्यतायां तु चमसशब्दस्य दक्षिणाशब्देन ब्रह्मशब्देन च संबन्धे सति कृत्स्नदक्षिणायाः पुरुषान्तरस्य च निवृत्तिः । तथा सति पूर्वोक्तसिद्धान्त एवात्र पूर्वपक्षीभवति । दक्षिणामुद्दिश्य चमस एको विधेयः । तस्य ब्रम्हसंबन्धोऽपरो विधेयः । ततोऽर्थभेदाद्वाक्यभेदो दुर्वारः । तस्माद्दक्षिणाशब्देन तदंशं लक्षयित्वा ब्रम्हसंबद्धदक्षिणांशमनूद्य चमसमात्रविधानात्तद्भागस्यैव निवृत्तिः । अत्र सिद्धान्तप्रतिपादनेऽन्येषामृत्विजां दक्षिणाया अबाधेन ब्रह्मदक्षिणाया एव बाधस्य बोधनादृत्विग्भेदाद्दक्षिणाभेद इति सिद्धं भवति । सिद्धमाह–**ततश्चेति** ॥ २ ॥

१ । १ । ३

[ शाङ्करभाष्यम् ] **पीतमुदकमिति** । पूर्वमेवोदकं प्राशितं ततः परमृत्विग्गृहगमनानन्तरं ता गावः कदापि जलं न पास्यान्ति सामर्थ्याभावात् । एवमेव तृणभक्षणस्य दुग्धदानस्यापि च न सामर्थ्यम् । अप्रजननसामर्थ्याः–प्रजननं प्रसवस्तत्रासमर्थाः [प्र.४]। **निष्फला इति** । त्रिविधं हि गवां फलम् ।

दुग्धं प्रसूतिर्गोमयादिकं चेति । तत्र दोहनस्य प्रसूतेश्चाभावः पूर्वमुक्तः । गोमयमपि कृशगवीनां नोपयोगाय तस्य द्रवीभूतत्वात् ॥ ३ ॥

१ । १ । ४ ।

[ शाङ्करभाष्यम् ] **कृत्वसम्पत्तिनिमित्तमिति** । क्रतोरसंपत्तिरसांगता निमित्तं यस्य तत् क्रत्वसाङ्गतानिमित्तम् । **अनिष्टमिति** । नञो विरोधरूपोऽर्थः । इष्टं स्वर्गादि तद्विरुद्धं फलं स्यादित्यर्थः । **पुत्रेण सतेति** । पुन्नाम्नो नरकात्त्रायते पितरमिति हि पुत्रशब्दस्य योगजोऽर्थः । ततश्च पितुर्नरकाद्रक्षणं कर्तव्यमिति हि पुत्रधर्मो मयावश्यमनुष्ठेय इत्यर्थः । **आत्मप्रदानेनापीति** । अपिशब्देन स्वशरीरातिरिक्तं द्रव्यं तत्समीपे नासीत्किंच द्रव्यान्तरे तस्य दानसामर्थ्यमपि नासीदिति बोध्यते मया पुत्रेण सतात्मप्रदानेनापि क्रतुसंपत्तिं कृत्वा पितुरनिष्टं फलं निवारणीयमित्यन्वयः । **ततेति** । तातेत्यर्थे छान्दसं रूपम् । द्वितीयं-द्वितीयवारम् । तृतीयं-तृतीयवारम् । पुनःपुनस्तथैवोवाचेत्यर्थः । अयं-कस्मै मां दास्यसीति पुनः पुनः प्रश्नकरणरूपः ॥ ४ ॥

[प्रकाशिका] [पृ.४] **आस्तिकाग्रेसर इति** । अस्ति दिष्टमिति मतिर्येषां त आस्तिकास्तेषामग्रेसरः श्रेष्ठः स्वदेहं प्रत्यर्प्यापि जनकस्य यज्ञफलसिद्धिं कामयतेऽत आस्तिकाग्रेसरत्वं तस्य । **निर्विद्यमान इति** । एवं पुनः पुनः प्रश्नप्रबन्धेन खेदं प्राप्यमाण इत्यर्थः ॥ ४ ॥

१ । १ । ५ ।

[ शाङ्करभाष्यम् ] **परिदेवयां चकारेति** । दीर्घकालं चिन्तयामासेत्यर्थः । [पृ.५] **गच्छामीति** । मुख्यशिष्यवृत्त्या वर्त इत्यर्थः । त्रिविधा हि शिष्यादीनां वृत्तिः । मुख्यमध्यमाधमभेदात् । तत्र गुरोरिष्टं ज्ञात्वा तदाज्ञां विना तदिष्टसाधने मुख्या प्रथमा वा वृत्तिः । गुरोराज्ञया तदिष्टसंपादने प्रवृत्तिर्मध्यमा वृत्तिः । तदाज्ञयापि तत्राप्रवृत्तिरधमा वृत्तिः । विशिष्टगुणं मुख्यमध्यमवृत्तिभ्यां प्रवर्तमानम् । **स किंस्विदिति** । स मे पिता मद्दानद्वारा यमस्य किं प्रयोजनं संपादयिष्यति । क्रतौ यमोद्देशेन पुत्रदानस्याविधानात्किमपि तत्प्रयोजनं न दृश्यत इत्यर्थः । नूनं-नियतम् । तथापि तत्पितुर्वचो मृषा मा भूदित्येवं परिदेवनपूर्वकं ‘ किं मयोक्तं ’ इति शोकाविष्टं पितरमाहेत्यन्वयः । किं मयोक्तं-किमेतन्मृत्यवे त्वा दास्यामीत्ययोग्यं मयोक्तमिति शोकाकुलम् ॥ ५ ॥

[ प्रकाशिका ] [पृ.५] **ऋत्विग्भ्य इति**। पित्रा याजकान्प्रति मम समर्पणं क्रियेत चेद्यथा तेषां प्रेषणादिकार्यनिर्वाहार्थं ममोपयोगः स्यात्तथा मया यमस्य किं कार्यं निर्वोह्येत पूर्णकामत्वात्तस्येति चिन्ता नचिकेतसो मनसि पदं चकारेत्यर्थः ॥ ५ ॥

१ । १ । ६ ।

[ शाङ्करभाष्यम् ] प्रेषणमनिच्छन्तं पितरं नचिकेता ब्रूते-पूर्वजवृत्तानुसारं सत्यपालनं कुर्विति तदाह श्रुतिः—**अनुपश्येत्यादिना**। निभालय—दीर्घालोचनं कुरु। **सस्यमिवेति**। यथा सस्यं फलाधिगमानन्तरं रसवियुक्तं सन्नश्यति तथा मनुष्योऽपि वृद्धावस्थां प्राप्य म्रियत इत्यर्थः। न केवलं जरामरणे तस्य किन्तु जनिरपीत्याह-**मृत्वा चेति**। **सस्यमिवेति**। वर्षासु वृष्टिसिक्तं सस्यं यथा प्रादुर्भवति तथा संचितकर्माभिमुख्ये मनुष्योऽपि देहान्तरं लभत इत्यर्थः। एवं पुनर्जन्म मरणं चातोऽसत्यकरणेन न किञ्चित्फलमिति भावः। मां यमाय प्रेषय तदन्वात्मनः सत्यं पालयेत्यन्वयः॥६॥

१ । १ । ७ ।

[ शाङ्करभाष्यम् ] [ पृ.६ ] श्रुत्यानुक्तं पूर्वभाषणादिकं कथायामपेक्षितं पूरयति **स एवामिति**। प्रोषिते ब्रह्मभवनं गते अमात्याः—अमा समीपे भवाः सचिवादयः। यतः सन्तस्तस्याग्नेर्दाहं शमयन्त इवातिथेरेतां पाद्यासनादिलक्षणां शान्तिं कुर्वन्त्यत इत्यन्वयः। **श्रूयत इति**। यस्याग्निहोत्रमित्यादिश्रुतौ यतश्चेति चकारेण शिष्टाचारोऽप्यातिथिपूजायां द्योत्यते ॥ ७ ॥

[ प्रकाशिका ] **द्वास्था इति**। द्वारि तिष्ठन्ति ते द्वारपाला यामिकाः। **तदपचारेणेति**। तस्याग्निरूपातिथेरपचारेण पूजनाभावनिमित्तेनापराधेन ७

१ । १ । ८ ।

[ शाङ्करभाष्यम् ] पूजाया अकरणेऽनिष्टप्राप्तिं बोधयन्ति भार्यादयः—**अनिर्ज्ञातेत्यादिना**। अनिर्ज्ञातोऽत्यन्तमज्ञातः प्राप्यः प्राप्तुं योग्यो हेमाचलादिस्तस्य प्रार्थना हेमाचलो मे भूयादितीच्छा आशापदवाच्या। तथा निर्ज्ञातः प्रत्यक्षादिना नितरां ज्ञातः प्राप्योऽर्थो राज्यादिर्यस्याः सेच्छा प्रतीक्षापदवाच्या। **इष्टं च पूर्तं च**। पूर्वपददीर्घः। यागजं—पितृलोकादि। तदुक्तं-वापीकूपतडागादिदेवतायतनानि च। अन्नप्रदानमारामाः पूर्तमर्थ्याः प्रचक्षते। एकाग्निकर्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते॥

इति । सर्वास्ववस्थासु—कष्टावस्थासु । अपिशब्दात्स्वस्थावस्थायां किमु वक्तव्यमिति कैमुतिकन्यायो द्योत्यते ॥ ८ ॥

[प्रकाशिका] [पृ.६] **रुधादित्वाच्छ्रनमिति** । अस्य धातोः परस्मैपदित्वाद्वृङ्क्त इति रूपासिद्धिं मत्वा गत्यन्तरमाह—**वृजि वर्जन इति** । अयमपि दीर्घो-कारेत्संज्ञकस्तथापि केषांचिन्मतमादृत्येयमुक्तिः । **शपो लुग्वेति** । "अदिप्र-भृतिभ्यः शपः" पा. सू. २ । ४ । ७२ इत्यनेन ॥ ८ ॥

१ । १ । ९

[ शाङ्करभाष्यम् ] [पृ.७] **अनशनेनेति** । अनशनपूर्वकमित्यर्थः । **तत्प्राप्त्युश-मेनेति** । दोषप्राप्तिनिरासद्वारेत्यर्थः । **त्वदधिकसंप्रसादनार्थमिति** । यद्यपि त्वदनुग्रहेणैव सर्वं मम संपन्नं तथापि तवाधिकं प्रसादनं प्रसन्नता तदर्थम् । **एकैकां रात्रिं प्रतीति** । निवासाधिकरणीभूतामेकैकां रात्रिं प्रत्येकैको वर इति समुच्चित्य वरत्रयमित्यर्थः ॥ ९ ॥

[ प्रकाशिका ] [पृ.७] **लिप्साभावेऽपीति** । लब्धुमिच्छा लिप्सा तदभा-वेऽपीत्यर्थः ॥ ९ ॥

१ । १ । १०

[ शाङ्करभाष्यम् ] दित्सुः—दातुमिच्छुः । **शांतसंकल्प इति** । शान्तो यमं प्राप्य किं मम पुत्रो विधास्यतीति संकल्पो विचारो यस्य । यमालयं गत्वा किं मम पुत्रस्य स्यादिति चिन्तावानित्यर्थः । मृतो यमादागतोऽयं द्रष्टुमनर्ह इति मत्वोपेक्षां यथा न कुर्यात्तथा वरं देहीत्याह—**किंच त्वत्प्रसृ-ष्टमिति** । यत्पितुः परितोषणमित्यस्यैतत्प्रयोजनमित्यादिना संबन्धः । एतत्प्र-योजनमिति बहुव्रीहिः ॥ १० ॥

[ प्रकाशिका ] अभीत्युपसर्गस्य वदधातुना साकं संबन्ध इति द्योत-यति— **यद्वेति** । नन्वभिपूर्वकवदधातोराशीर्वादार्थे प्रयोगे किं मानमित्यत आह—**अभिवदातिनेति** । अभिवदतिना—अभिपूर्वकवदधातुना । 'इक्श्तिपौ धातुनिर्देशे' का. वा. इत्यनेनायं श्तिपः प्रयोगः ॥ १० ॥

१ । १ । ११

[ शाङ्करभाष्यम्] [पृ.८] **भवितेति** । भविष्यतीत्यर्थः । प्रतीतवान्—प्रत्य-भिज्ञावान् । **द्व्यामुष्यायणो वेति** । उद्दालक एवौद्दालकिरित्यत्र स्वार्थिक इञ्प्रत्ययो दर्शितः । अपत्यार्थेञ्प्रत्ययं गृहीत्वेदं व्याख्यानम् । **ननूद्दालक-स्यारुणस्य च कथमेकमपत्यमिति चेन्न । द्व्यामुष्यायणत्वेन तत्सिद्धेः ।**

अभ्रातृका कन्या, पित्रास्यां जायमानः पुत्रो मम भवत्विति परिभाषणेन यदा जामात्रे दीयते तदा तस्यां जायमानः सुतः प्रतिगृहीतुर्दातुश्च कन्यापितुर्द्वयोरपि भवति स द्व्यामुष्यायण इत्यभिधीयते । इयमभ्रातृका कन्या पुत्रिकेत्यभिधीयते । एवं चैतादृशपुत्रिकापुत्र उभयोरप्यपत्यं भवति ततश्चोद्दालकारुणाभ्यामुभाभ्यामपि शब्दाभ्यामपत्यार्थेऽप्रत्ययः साधुः । अनेनेदं सिद्धम् । यदुद्दालकभार्यायामरुणस्याभ्रातृककन्यायामुत्पन्नः पुत्रो गौतम आसीदिति । उद्दालकः प्रथमोक्तत्वात्पितैव भवितुमर्हति । अरुणश्च मातामह इति ध्येयम् । दत्तकसंबन्धेन द्विगोत्रत्वादपि द्व्यामुष्यायणत्वं धर्मशास्त्रे प्रसिद्धम् । तेन जारजत्वशङ्का परास्ता । छान्दोग्योपनिषत्प्रथमाध्यायद्वादशखण्डप्रथममन्त्रव्याख्यायामपि 'द्व्यामुष्यायणो ह्यसौ द्विनामा द्विगोत्र इत्यादि हि स्मृतिः, इति शंकराचार्यैरुक्तम् । तत्रानन्दज्ञानोक्तिरेवम्-यतः सुतो जायते येन चायं धर्मतो गृह्यते तयोरुभयोरित्याह–उभयत इति ।' उभयोरप्यसावृक्थी पिण्डदाता च धर्मतः ' इति स्मरन्तीत्यर्थः । **मृत्युगोचरादिति** । मृत्युविषयात्तद्गृहादित्यर्थः ॥११॥

[ प्रकाशिका ] [ पृ. ८ ] **गोत्रापत्यमिति** ' अपत्यं पौत्रप्रभृति गोत्रम् " पा. सू. ४ । १ । १६२ इति पाणिनिना परिभाषितत्वात्पौत्रः प्रपौत्रो वेत्यर्थः । एवं च गौतम उद्दालकस्य सुतोऽरुणस्य पौत्रादिः । **द्विर्वचनाभाव** इति । शाङ्करभाष्यगृहीतपाठे तु द्वित्वं दृश्यते ॥ ११ ॥

१ । १ । १२

[ शाङ्करभाष्यम् ] स्वर्गसाधनमग्निज्ञानं प्रष्टुकामः प्रथमं स्वर्गं स्तौति- **स्वर्गे लोक इति** । **रोगादिनिमित्तमिति** । आदिपदेनाधिदैविकाधिभौतिकपीडाग्रहणम् । न च तत्र तवापि मृत्योर्भीतिरित्याह–**नचेति** । **इहलोकवदिति** । अस्मिँल्लोके यथा जरायुक्तः पुरुषस्त्वत्तो बिभेति तथा तत्र स्वर्गे न कोऽपि कस्मादपि बिभेतीत्यर्थः । **अतिक्रम्येति** । उल्लङ्घ्य अप्राप्येत्यर्थः ॥ १२ ॥

[ प्रकाशिका ] उत्तरत्र–ऊनविंशतिकारिकायाम् ॥ १२ ॥

१ । १ । १३

[ शाङ्करभाष्यम् ] [ पृ. ९ ] **अध्येषीति** । अधिपूर्वकेक्स्मरणे इत्यस्य धातो रूपम् । **तदेतादिति** । यस्मादग्निरमृतत्वसाधनं तस्मादेतद्विषयकं ज्ञानं वृण इत्यर्थः ॥ १३ ॥

[ प्रकाशिका ] [ पृ. ९ ] **इति भाव इति** । छान्दोग्यवाक्यात्स्वरूपाविर्भावलक्षणो यो मोक्षस्तेन शब्दितं तत्तात्पर्यभूतं यदमृतत्वं तद्विशिष्टदेशयुक्तब्रह्मप्राप्तिपूर्वकमस्ति । पूर्वं देशविशिष्टं ब्रह्म प्राप्यते ततोऽमृतत्वलाभ इति तात्पर्यम् ॥ १३ ॥

१ । १ । १४

[ शाङ्करभाष्यम् ] उरूपो निपातो यदित्यर्थे । **शिष्यबुद्धिसमाधानार्थमिति** । समाधानं नामेतरविषयनिराकरणपूर्वकं चित्तस्यैकविषयत्वापादनम् । प्ररोचना प्रवृत्तिजनिकेत्यभिप्रेत्याह—**अधुनेति** । **विराड्रूपेणेति** स त्रेधात्मानं व्यकुरुतेति श्रुतेरग्निवाय्वादित्यरूपेण समष्टिरूपो विराडेव व्यवस्थित इति तेन विराड्रूपेणाग्निर्जगतः प्रतिष्ठेत्युच्यते ॥ १४ ॥

[प्रकाशिका] [पृ.१०]**एतत्स्वरूपमिति** । एतव्द्याख्यायामेतदिति पाठो न त्वेतमिति। इदं ज्ञानं ब्रह्मोपासनद्वारा मोक्षं प्रति कारणं भवतीति वाक्यार्थः । विद्ऌ लाभ इत्यस्य स्वीकारेणाह—**यद्वेति** । **हेतुहेतुमद्भावेति** । ज्ञानं हेतुः प्रतिष्ठालाभो हेतुमान् ॥ १४ ॥

१ । १ । १५

[ शाङ्करभाष्यम् ] [ पृ. १० ] **श्रुतेर्वचनामिति** । सविस्तरमग्निज्ञानं चयनप्रकरणे द्रष्टव्यमिति श्रुतिर्बोधयति । **लोकादिमिति** । स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥१॥ इति स्मृत्या विराजोऽग्नेरादित्वं ज्ञेयम् । **येन प्रकारेणेति**—तत्तदिष्टकाप्रकाशतत्तन्मंत्रोच्चारणेनेत्यर्थः । नचिकेतसो धारणाशक्तिमाह—**यथावदिति** । **प्रत्युच्चारितवान्**—यमोक्त्यनुसारमनूदितवान् ॥ १५ ॥

[ प्रकाशिका ] यावतीः—यावत्यः । प्रथमाबहुवचने पूर्वसवर्णदीर्घश्छान्दसः । लोके “ दीर्घाज्जसि च ” पा. सू. ६ । १ । १०५ इति तन्निषेधस्य सत्त्वात् ॥ १५ ॥

१ । १ । १६

[ शाङ्करभाष्यम् ] शिष्ययोग्यतां—उक्तार्थग्रहणधारणसामर्थ्यरूपाम् । **अक्षुद्रबुद्धिरिति** । अयं शिष्यो मदुक्तं सर्वं ग्रहीष्यति तेन मम माहात्म्यन्यूनतेति प्राकृतगुरुवदस्य बुद्धिर्नेत्यर्थः । अथवा वरत्रयमेवालमिति कार्पण्यापहता बुद्धिरविद्यमाना यस्य । शब्दवतीं—स्वनयुक्ताम् । स्वनकारणमाह—**रत्नवतीमिति** । **विचित्रामिति** । नीलादिनानाविधरत्नयुक्तत्वाद्विचि-

त्रवर्णामित्यर्थः । सृज्धातोर्गत्यर्थमादायाह—**यद्वेति** । **अकुत्सितामिति** । धूमादिमार्गेणार्चिरादिमार्गेण च यत्फलं लभ्यते सा न कुत्सिता निन्दिता गतिः किन्तु तदितरा "अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि" छां. ५ । १० । ८ इत्युक्ता कुत्सिता गतिः । त्वंतु पूर्वोक्तं फलद्वयमेव गृहाणेत्यर्थः । [ पृ. ११ ] ननु कर्माकृत्वा केवलवरप्रदानेन फललाभः कथं स्यादित्याह—**अन्यदपीति** । अनेकफलकारणीभूतं शास्त्रसिद्धमन्यदपि कर्मविज्ञानं स्वीकुर्वित्यर्थः ॥ १६ ॥

१ । १ । १७

[ शाङ्करभाष्यम् ] **त्रिणाचिकेत इति** । त्रिःकृत्वो नाचिकेत इति विग्रहानुसारं त्रिर्णाचिकेत इत्यपेक्षते तत्र विसर्गलोपश्छान्दसः । **यथावदिति**। यथावत्—यथाकालम् । उपनयनपर्यन्तं मातृतः शिक्षणं वेदाध्ययनपर्यन्तं पितृत आचार्यतश्च शिक्षां प्राप्येत्यर्थः । **प्रामाण्यकारणमिति** । धर्मज्ञानस्येति शेषः । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छैलिनोऽब्रवीदिति श्रुत्यन्तरात्तन्मात्राद्यनुशासनं धर्मज्ञानस्य प्रामाण्यकारणमित्यर्थः । **प्रत्यक्षानुमानागमैरिति**। इदमवशिष्टप्रमाणत्रयस्योपलक्षणम्। मीमांसाद्वयेऽपि प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धीतिषण्णां प्रमाणानां ग्रहणात् । षट्सु त्रयाणामेव प्राधान्यं द्योतयितुं तथा निर्देशः । विशुद्धिः—धर्मावगतिः । **इज्याध्ययनदानानामिति** । दानं--बहिर्वेदि दीयमानम् । यज्ञाङ्गदानस्येज्यायामन्तर्भावात् । यथा त्रिकर्मकृतस्तरणं तथा त्रिणाचिकेतस्यापीति फलमुक्त्वा फलान्तरमप्याह—**किंचेति** । **सर्वज्ञो हीति** । हिरण्यगर्भजत्वात्सर्वज्ञत्वम् । **दृष्ट्वा चात्मभावेनेति** । इदमत्र तात्पर्यम् । विंशत्यधिकानि सप्त शतानीष्टकानां संख्या संवत्सरस्य च प्रातःसायंकालयोरनुष्ठीयमानान्यग्निहोत्राणि तावत्संख्याकान्येव तैरिष्टकास्थानीयैश्चितोऽग्निरहमित्यात्मभावेन ध्यात्वेति स्वबुद्धिः स्वेन कर्तव्या बुद्धिरुपासना तया साक्षात्कृतां **शान्तिं** वैराजं फलम् । **ज्ञानकर्मसमुच्चयानुष्ठानेनेति** । ज्ञानमुपासनं नत्वभेदज्ञानमनुष्ठानेनेति पदस्वारस्यात् । कर्म—चयनाख्यम् । ॥ १७ ॥

[ प्रकाशिका ] **अनुवाकत्रयाध्यायीति** । त्रिणाचिकेत इत्यस्यार्थः शाङ्करभाष्ये त्रिःकृत्वो नाचिकेतोऽग्निश्चितो येनेति कृतः । अत्र ' अयं वाव ' इत्याद्यनुवाकत्रयाध्यायीति कृतः । तत्र शाङ्करभाष्यार्थ एव संगतः पूर्वस्मिन्मंत्रे तवैव नाम्ना भवितायमग्निरिति श्रुतिवचनात् । [ पृ. ११ ] अ-

ग्न्यनुष्ठानमेव परमात्मोपासनमिति बोधयति—**परमात्मोपासनेनेति** । एकार्थ्यात्—समानार्थकत्वात् ॥ १७ ॥

१ । १ । १८

[ शाङ्करभाष्यम् ] [ पृ. १२ ] अग्निशब्देन ध्यानमुच्यत इत्याह—क्रतुमिति क्रतुं संकल्पं ध्यानमिति यावत् । **मृत्युपाशानिति** । पाशशब्दो बन्धवाची । अधर्माज्ञानादयो मृत्युबन्धाः । **विराडात्मस्वरूपप्रतिपत्त्येति** । विराडात्मस्वरूपं लब्ध्वा ॥ १८ ॥

[ प्रकाशिका ] [ पृ. १२ ] **नाचिकेतमिति** । पूर्वमंत्रार्थे नाचिकेतशब्दस्य भिन्नोऽर्थः । अत्र च भिन्नः ॥ १८ ॥

१ । १ । १९

[ शाङ्करभाष्यम् ] पुनरुक्तिं परिहरति—**उक्तोपसंहार इति** । **जनास इति** । "आज्जसेरसुक्" पा. सू. ७।१।५० इत्यसुगागमः । **अदत्त इति**। तृतीयवर इति शेषः ॥ १९ ॥

[ प्रकाशिका ] अत्र प्रकाशिकाकृद्भिः शांकरपाठातिरिक्त एको मन्त्रो गृहीतः । स च प्रकाशिकायां मुद्रितः । तत्प्रकाशिकेदानीं व्याख्यायते । **अपुनर्भवहेतुभूतामिति** । पुनर्भवः—पुनर्जन्म । कोषेषु—पुस्तकेषु । कैश्चित्—शंकराचार्यैः । अव्याकृतः—अव्याख्यातः । शंकराचार्यैरेवायं मंत्रो न व्याख्यात इति न किन्तु मतान्तरानुयायिभिर्माध्वादिभिरपि न व्याख्यातस्तेन तत्संमतोऽपि नायं मंत्रपाठः [ पृ. १३ ] स्वर्गशब्देन मोक्षरूपोऽर्थो ग्राह्य इति साधयति—**नचैतादित्यादिना** । भाष्यकृता—श्रीभाष्यकृता श्रीरामानुजाचार्येण । **प्रस्तुत्येति** । 'त्रयाणामपि चैवमुपन्यासः प्रश्नश्च' ब्र० सू० १।४।६ इति सूत्रे । **निर्दिश्यमानतयेति** । 'श्वो भावा मर्त्यस्य यदन्तकैतत्' इत्यादिना । क्षयिष्णुः— क्षयशीलः । **प्रार्थ्यमानत्वानुपपत्तेरिति** । यः क्षयि फलं निन्दति स एव क्षयिष्णुं स्वर्गं कथं प्रार्थयेतेत्यर्थः । **स्वर्गशब्दवाच्यत्वसंभवादिति** । तेन स्वर्गशब्दस्य मोक्षरूपार्थे लक्षणापि न कर्तव्या भवतीति भावः । करणतः—साधनद्वारा । तात्पर्यतः—सारार्थतया । चतुरभ्यस्तस्य—चतुर्वारं निर्दिष्टस्य । मुख्यया वृत्त्या—अभिधावृत्त्या । अमुख्यया—लक्षणया । **स स्वर्ग इत्यादि** । अस्य जैमिनीयसूत्रस्याप्यमर्थः—यत्र विशेषतः फलं नोक्तं तेषां विश्वजिदादीनां कर्मणां स्वर्ग एव फलम् । यतः सर्वजनान्प्रति स्वर्गस्य प्रीतेः समानत्वात्।

सर्वे हि स्वर्गमेव प्रीतिमेव कामयन्त इत्यर्थः। अस्मिन्सूत्रे स्वर्गशब्दः प्रीत्यर्थकत्वेन शबराचार्यैर्व्याख्यातः। **अपवर्गप्रतिद्वन्द्विवाचितयेति**। अपवर्गस्य नित्यस्य मोक्षस्य प्रतिद्वन्द्वी विरुद्धोऽनित्यत्वादिना स्वर्गस्तद्वाचकत्वादित्यर्थः। **लोकसंस्थानचिन्तकैरिति**। लोकानां स्वरादिलोकानां यत्संस्थानं विशिष्टदेशस्थितिस्तद्विचारकैर्ज्योतिर्विद्भिरित्यर्थः। अतथात्वात्-ध्रुवसूर्यान्तर्वर्तिलोकत्वाभावात्। **बाधकाभावादिति**। शक्यार्थबाधे लक्षणेति साहित्यशास्त्रविदां मतम्। मुख्यार्थे बाधकं शङ्कते—**किमत्रेति**। भूतसंप्लवः—प्रलयः। [ पृ. १४ ] **अपेक्षितामृतत्वपरतयेति**। अपेक्षितमपेक्षायुक्तं सापेक्षं भूलोकस्थापेक्षया स्वर्गस्थस्याधिककालपर्यन्तं स्थितिमत्त्वादमृतत्वं न तु पूर्णतयामृतत्वमित्यर्थः। निरूढः—रूढिपरिगृहीतः। औपसंहारिकः–उपसंहारे दृश्यमानः। उपसंहारस्यापि षड्विधलिंगघटितत्वात्तात्पर्यनिर्णायकत्वं प्रसिद्धम्। प्रक्रमस्थः—उपक्रमस्थः। अनन्यथासिद्धः—अन्यथासिद्धिशून्यः। अन्यार्थरहित इति यावत्। **विशेष्यवाचीति**। विशेषणं विशेष्यानुसार्यर्थकं भवति। विशेष्यं तु स्वतन्त्रत्वात्स्वार्थं न जहाति। **अन्यथानयनासंभवादिति**। विशेषणार्थानुसारेण विशेष्यस्यान्यार्थकरणासंभवात्। तद् दृष्टान्तेन साधयति–**नहीति**। अभिरूपः—सुन्दरः। प्रतिब्रुवता—उत्तरयता। उपक्षिप्ते–पुरो निहिते। कथित इति यावत्। **प्रतिषेधनेति**। प्रतिषिद्धं वस्त्वत्यन्तापेक्षितं भवतीति भावः। **उपक्रमोपसंहारमध्याभ्यस्तेत्यादि**। उपक्रमोपसंहारयोरभ्यासस्य च तात्पर्यनिर्णायकत्वादित्यर्थः। **उपक्रमाधिकरणन्यायेनेति**। उपक्रमस्यासंजातविरोधित्वेनोपसंहारापेक्षया प्रबलत्वात्प्रथमे प्रश्नवाक्ये विद्यमानस्य स्वर्गशब्दस्य प्रबलत्वम्। उपक्रमाधिकरणन्यायो नामोपक्रमोपसंहारयोर्विरोध उपक्रमस्यैव प्राबल्यमिति निर्णायको न्यायः। अयं च जैमिनिना तृतीयाध्याये तृतीयपादे 'वेदो वा प्रायदर्शनात्' इति द्वितीयसूत्रेण दर्शितः। अस्य सूत्रस्यार्थः—उच्चैर्ऋचेत्युपसंहारवाक्य ऋक्शब्देन ऋग्वेद एव ग्राह्यो नतु ऋङ्मात्रम्। यतो वेदस्यैव प्रायदर्शनं प्राथम्यत उपक्रम उक्तिरस्ति। उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इत्यभियुक्तोक्ते उपक्रमोपसंहारौ तात्पर्यनिर्णायकावित्यवगतं तत्रोपक्रमो नामारम्भः। उपसंहारो नाम समाप्तिः। तन्मध्य उपक्रमस्य प्रथमपठितत्वेन पूर्ववाक्यैर्विरोधो न संभवति। तेनासं-

जातविरोधित्वात्तस्य प्राबल्यम् । तद्वशेनोपसंहारो नेयः । अत्रेदमुदाहरणम्—' प्रजापतिर्वा इदमेक आसीत् । स तपोऽतप्यत । तस्मात्तपस्तेपानात्त्रयो देवा असृज्यन्त । अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त । अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः । आदित्यात्सामवेदः । इत्येवमुपक्रम्य निगमने ( उपसंहारे ) इदं श्रूयते । उच्चैर्ऋचा क्रियते । उच्चैः साम्ना । उपांशु यजुषा—इति । अत्र ऋक्शब्देनोपक्रमानुसारमुपसंहारे ऋग्वेदो गृहीतो भवति । भूयोऽनुग्रहार्थमल्पीयानुपक्रमो बाध्यतामिति शंकते—नैवेति । भूयसामिति । इदं संपूर्णसूत्रमेवम्—' विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ' जै. सू. १२।२।२२ विवृतं चैतच्छबराचार्यैः । ' विप्रतिषिद्धधर्माणामेतेषामाग्निष्टुतश्चैकादशानामन्हां सधर्मत्वं स्यात्तदीयो धर्मः कर्तव्यः । को हेतुः । भूयस्त्वमेव । बहुषु गुणसंपन्नेषु महत्फलं भवति । एकस्मिन्नल्पं फलं भवति । एष हि लोके दृष्टान्तः । एकादशसु प्रदीपेषु तैलवर्तिसंपन्नेष्वेकस्मिन्गृहे महान्प्रकाशो भवति विपर्ययेऽल्पः । किं पुनरिहोदाहरणम् । सुब्रह्मण्याग्निष्टुत्याग्नेयी । इतरेष्वहःस्वैन्द्री कर्तव्या ' इति । तस्माद्बहूनामनुग्रहस्य न्याय्यत्वादुपक्रमस्थमल्पं बाध्यम् । समाधत्ते—मुख्यं वेति । इदं संपूर्णसूत्रमित्थम्—' मुख्यं वा पूर्वचोदनाल्लोकवत् ' जै. सू. १२।२।२३ एतद्घटितद्विसूत्रात्मकमधिकरणम् । तच्चेत्थं विवृतं माधवाचार्यैरधिकरणन्यायमालाविस्तरे—' अग्नावैष्णवसारस्वत्योरिच्छयाथ मुख्यगम् । आद्यो नियामकाभावादन्त्यः प्राथम्यतो भवेत् ॥ ' अग्नावैष्णवमेकादशकपालं निर्वपेत् ' ' सरस्वतीमाज्यस्य यजेत ' इति श्रूयते तत्राग्नावैष्णवस्यैन्द्राग्नविकृतित्वेन सारस्वताज्यस्य चोपांशुविकृतित्वेनाज्यभागमंत्रविकल्पः । नियामकाभावादिति चेन्मैवम् । अग्नावैष्णवस्य प्रथमपठितत्वेन मुख्यत्वात्तज्जमनुष्ठानं युक्तम् । एवं चानेनाधिकरणेन प्रथमपठितस्य मुख्यत्वबोधनादुपक्रमस्थस्यैव प्राबल्यं न भूयोऽनुग्रहो न्याय्यः । तदुक्तं—औपसंहारिकबह्वपेक्षयेति । एवं पूर्वपक्षयित्वा समाधत्ते—अत्रोच्यत इति । स्वर्गकामाधिकरण इति। इदं हि जैमिनीये षष्ठाध्याये प्रथमपादे प्रथममधिकरणम् । इदं च स्वर्गादिफलसाधनताधिकरणमिति नाम्ना मीमांसाग्रन्थेष्वभिधीयते । अस्मिन्नधिकरणे ' स्वर्गकामो यजेत ' इति वाक्ये स्वर्गशब्देन द्रव्यं गृह्यत उत प्रीतिरिति संशयः । द्रव्यमिति पूर्वपक्षः । प्रीतिरित्युत्तरपक्षः । नागृहीत-

**विशेषणन्यायेनेति**। नागृहीतविशेषणा विशिष्टबुद्धिरिति हि न्यायस्वरूपम्। अस्यार्थः—विशेषणज्ञानाभावे विशिष्टबुद्धिर्नोत्पद्यते। न ह्यप्रतीते विशेषणे विशिष्टं केचन प्रत्येतुमर्हन्तीत्यर्थः। यथा गोत्वरूपाविशेषणज्ञानेन गोत्वविशिष्टगोव्यक्तेर्ज्ञानम्। प्रकृते स्वर्गकामाधिकरणे स्वर्गकाम इति विशेषणज्ञानं विना विशिष्टस्याधिकारिणो ज्ञानं न भवेत्। तदर्थं स्वर्गशब्दस्य प्रीतिरूपोऽर्थः प्रदर्शितः। अत्र प्रकाशिकाकृद्भिः शबरभाष्यमनुसृत्यैव सर्वे पूर्वोत्तरपक्षाः संगृहीता अतस्तदेव सूत्रत्रयगतं शबरभाष्यमुद्ध्रियते तेन मूलं प्रकाशिकास्थं सुखावबोधं भवेत्। तथाहि—' यागादिकर्मणां स्वर्गफलसाधनताधिकरणम्। ६।१।१८ अधिकारन्यायः। द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ६।१।१।१ पूर्वपक्षसूत्रमिदम्। ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इत्येवमादि समाम्नायते तत्र सन्देहः। किं स्वर्गो गुणतः कर्म प्रधानतः। उत कर्म गुणतः स्वर्गः प्रधानतः। इति। कुतः संशयः। इह स्वर्गकामोऽपि निर्दिश्यते यजेतेत्यपि। अत्र स्वर्गकामयागयोः संबन्धो गम्यते। तस्मिंश्च संबन्धे किं यागः साधनत्वेन संबध्यत उत साध्यत्वेन। इति भवति विचारणा। तत्र यदि स्वर्गकामस्य पुरुषस्य यागः कर्तव्यतया चोद्यते स्वर्गकामेन यागः कर्तव्य इति, स्वर्गेच्छाविशिष्टस्य स सिध्यतीति गम्यते। स्वर्गेच्छा तत्र पुरुषस्य यागं प्रत्युपदिश्यते तेन तस्य स सिध्यति नान्यस्येति। यः स्वर्गकामः स शक्नोति पुरुषो यागं साधयितुम्। अथ स्वर्गकामस्य कामः कर्तव्यतया चोद्यते ततो यागविशिष्टा कर्तव्यतेति यागः साधकोऽभ्युपगम्यते। स चायमुभयोरप्यर्थ एतस्मादुच्चारिताद्वाक्याद्गम्यते। यागो वा कर्तव्यः कामो वेति। न चैतद्यौगपद्येन संभवति यदा कामो न तदा यागः। यदा यागो न तदा कामः। वचनव्यक्तिभेदादुपपन्नः संशयः। तथेदमपरं संदिग्धम्। किं प्रीतिः स्वर्ग उत द्रव्यम्। इति। यदि द्रव्यं स्वर्गस्ततः प्रधानं कर्म द्रव्यं गुणभूतम्। अथ प्रीतिः स्वर्गस्ततो यागो गुणभूतः स्वर्गः प्रधानम्। इति। कुतः संशयः। नास्त्यत्र कामस्य गुणत्वेन प्राधान्येन वा श्रुतिः। संबंधमात्रं त्वस्य यागेन गम्यते। द्रव्यस्य तु कर्मार्थता स्वभावतः। पुरुषप्रयत्नस्य च फलार्थता। किं तावत्प्राप्तम्—स्वर्गो गुणतः कर्म प्रधानत इति। तत्र तावद्वर्णयन्ति द्रव्यं स्वर्ग इति। कथमवगम्यते—सर्वेषामेव शब्दानामर्थज्ञाने लौकिकः प्रयोगोऽभ्युपायः। तस्मिंश्च

लौकिके प्रयोगे द्रव्यवचनः स्वर्गशब्दो लक्ष्यते—कौशिकानि सूक्ष्माणि वासांसि स्वर्गः। चन्दनानि स्वर्गः। द्व्यष्टवर्षाः स्त्रियः स्वर्ग इति। यद्यत्प्रीतिमद् द्रव्यं तत्तत्स्वर्गशब्देनोच्यते। तेन सामानाधिकरण्यात् ‘ प्रीतिमत् द्रव्यं स्वर्गः ’ इति मन्यामहे। उपमानाच्छब्दप्रवृत्तिरिति चेन्न हि कस्मिंश्चिदनुपमिते लोके प्रसिद्धो यस्यैतदुपमानं स्यात्तस्मान्नोपमानम्। अतो द्रव्यं स्वर्ग इति। नेत्याह। प्रीतिः स्वर्ग इति न द्रव्यम्। व्यभिचारात्। तदेव हि द्रव्यं कस्यांचिदवस्थायां न स्वर्गशब्दोऽभिदधाति। प्रीतिं तु कस्यांचिदवस्थायां न, नाभिदधाति। तस्मादन्वयव्यतिरेकाभ्यामेतदवगम्यते—प्रीतौ स्वर्गशब्दो वर्तत इति। नैतदस्ति—प्रीतेरभिधायकः स्वर्गशब्द इति। कुतः। विशेषणत्वात्। यद्विशेषणं न तच्छब्देनोच्यते। तद्यथा—दण्डीति दण्डनिमित्तः पुरुषवचनः। दण्डोऽस्य निमित्तं नाभिधेयः। एवमेव प्रीतिवचनः। प्रीतिसाधनवचनस्त्वेष स्वर्गशब्द इति। ननु स्वर्गशब्दो लोके प्रसिद्धो विशिष्टे देशे—‘ यस्मिन्नोष्णं न शीतं न क्षुन्न तृष्णा नारतिर्न ग्लानिः पुण्यकृत एव प्रेत्य तत्र गच्छन्ति नान्ये। ’ अत्रोच्यते—यदि तत्र केचिदमृत्वा गच्छन्ति तत आगच्छन्त्यजनित्वा तर्हि स प्रत्यक्षो देश एवंजातीयकः। न त्वनुमानाद्गम्यते। ननु चान्ये सिद्धाः केचिद् दृष्टवन्तः। ते चाख्यातवन्त इति चेत्। न तत्र प्रमाणमस्ति—सिद्धा एवंजातीयकाः सन्ति ते च दृष्ट्वाचक्षीरन्निति। तस्मादेवंजातीयको देश एव नास्ति। ननु च लोकादाख्यानेभ्यो वेदाच्चावगम्यते देश एवंजातीयकः स्वर्ग इति। तन्न। पुरुषाणामेवंविधेन देशेनासंबन्धादप्रमाणं वचः। आख्यानमपि पुरुषप्रणीतत्वादनादरणीयम्। वैदिकमपि स्वर्गाख्यानं विधिपरं नास्त्येव। भवति तु विध्यन्तरेणैकवाक्यभूतं स्तुतिपरम्। यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्यात्तथाप्यस्मत्पक्षस्याविरोधः, प्रीतिसाधने स्वर्गशब्द इति। तेन, देशेन व्यवहाराभावात्कुतस्तस्याभिधायकः स्वर्गशब्दो भविष्यतीति। यदा प्रीतिमद् द्रव्यं स्वर्गस्तदा ब्रूमः ‘ द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्ध ’ इति। यागोऽत्र कर्तव्य इति श्रूयते स्वर्गकामस्य, तत्रावश्यं स्वर्गस्य यागस्य च संबन्धः। तत्र भूतं द्रव्यं भव्यं कर्म। भूतस्य च भव्यार्थता न्याय्या दृष्टार्थत्वात्। न तु भव्यस्य भूतार्थता। तत्र दृष्ट उपकारस्त्यज्येत तत्कथं पुनरवगम्यते यागः कर्तव्यतया चोद्यत इति। यदा कामस्यापि कर्तव्यतास्माद्वाक्यादवगम्यते।

उच्यते। कामस्य कर्तव्यता वाक्यात्, यज्यर्थस्य कर्तव्यता श्रुतेः। श्रुतिश्च वाक्याद्बलीयसी। तस्मादयमर्थः 'स्वर्गकामो यागं कुर्यात्—इति स्वर्गकामस्य यागः कर्तव्य इति। कर्तव्यश्च सुखवान्। अकर्तव्यो दुःखवान्। कर्तव्य इति चैनं ब्रूते। तस्मात्सुखफलो यागो भविष्यति। स तु यस्येच्छा तस्य सिध्यति नान्यस्येति गम्यते। तेन स्वर्गेच्छा यागस्य गुणभूता सर्वस्यापि कर्मणो द्रव्येच्छा भवति गुणभूता तया द्रव्यमानेतुं यतते दृष्टेनैव द्वारेण। इहतु स्वर्गसंज्ञकद्रव्येच्छैव नियम्यते यथैव सा गुणभूता प्राप्ता। तथैव सती नियम्यते दृष्टेनैव द्वारेण, नादृष्टेनोपकारेण। तेन स्वर्गेच्छया गुणभूतया स्वर्गद्रव्यं प्रति यतिष्यते यागं साधयितुम्। अथाप्यदृष्टेन तथापि न दोषः। 'असाधकं तु तादर्थ्यात्' ६।१।१।२ (सिद्धान्तसूत्रम्) तुशब्देन पक्षो व्यावर्त्यते। तत एतावत्तावद्वर्णयन्ति—प्रीतिः स्वर्ग इति। कुत एवमुक्तं भवता प्रीतिविशिष्टे द्रव्ये स्वर्गशब्दो वर्तत इति। यद्येवं पूर्वं तर्हि प्रीतौ वर्तितुमर्हति तां हि स न व्यभिचरति। व्यभिचरति पुनर्द्रव्यं—यस्यैव प्रीतिसाधनस्य द्रव्यस्य वक्ता स्वर्गशब्दस्तदेव यदा न प्रीतिसाधनं भवति तदा न स्वर्गशब्देनाभिधीयते। तस्मात्प्रीतिवचनोऽयम्। यत्तूक्तं दण्डिशब्दवदिति। सोऽपि प्रतीते शब्दाद्दण्डे, दण्डिनि प्रत्ययमादधाति। अन्तर्गतस्तत्र दण्डशब्दः स दण्डस्य वाचकः। इह पुनः स्वर्गशब्द एव प्रीतेरभिधाता। प्रीतिवचनश्चेद्यागो गुणभूतः प्रीतिः प्रधानम्। कुतः। तादर्थ्यात्पुरुषप्रयत्नस्य। प्रीत्यर्थं हि पुरुषो यतते तेन न प्रीतियोगसाधनमिति विज्ञायते। द्रव्यं हि यागसाधनं न ऋते द्रव्याद्यागो भवति। यस्माद्द्रव्यदेवताक्रिये यजतिशब्दो वर्तते। असत्यामपि प्रीत्यां भवति यागः। यदि च यागो न प्रीत्यर्थो भवेत् असाधकं कर्म भवेत्। असाधयितारं नाधिगच्छेत्। यो हि प्रीत्यर्थः स साध्यते नान्यः। ननु कर्तव्यतया यागः श्रूयते। उच्यते—सत्यं कर्तव्यतया श्रूयते कामोऽपि कर्तव्यतयावगम्यते। आह—श्रुत्या यागस्य वाक्येन कामस्य। न चोभयोर्वाक्यभेदः प्रसंगात्। उच्यते। यद्यपि यागः कर्तव्यः श्रूयते तथापि न कर्तव्यः। सुखदः कर्तव्यो भवति दुःखदो यागः। तस्मात्प्रत्यक्षेणाकर्तव्यः प्रत्यक्षेण च दुःखदः। कर्तव्यतावचनादनुमानेन सुखदो भवति—इति। उच्यते। अनुमानं च प्रत्यक्षविरोधान्न प्रमाणम्। तस्मादकर्तव्यो यागः। यदि न प्रीत्यर्थः। अथान्येन फलवचनेन संभंत्स्यत इति। उच्यते—सं-

बध्यमानोऽप्यविधीयमानो न समीपवचनमात्रेण फलवान् विज्ञायते। तस्मादनर्थको मा भूदिति स्वर्गस्य कर्तव्यता गम्यते। पुरुषप्रयत्नश्च यागविशिष्ट इति यागस्तस्य करणं स्यात्। तस्मात्सुष्टूक्तं यागो गुणभूतः स्वर्गः प्रधानभूत इति॥ 'प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसंबन्धस्तस्मात्कर्मोपदेशः स्यात्' ६।१।१।२ [युक्तिसूत्रम्] न केवलमानर्थक्यभयाद्यागस्य गुणभावं ब्रूमः। किं तर्हि स्वर्गसंज्ञकमर्थं प्रति करणत्वेन यागो विधीयते। ननु यागः कर्तव्यतया श्रुत्या विधीयते। सत्यमेवम्, आनर्थक्यं तु तथा भवति स्वर्गं प्रत्यविहिते यागे, स्वर्गकामः तस्मिन्निष्फले विधीयमानोऽपि निष्प्रयोजनः स्यात्तत्रास्योपदेशवैयर्थ्यम्। द्वयोश्च विधीयमानयोः परस्परेणासम्बद्धयोर्वाक्यभेदप्रसंगः। अतो न स्वर्गकामपदेन स्वार्थो विधीयते किं तर्हि उद्दिश्यते। तत्र वाक्यादवगतस्य कामस्य कर्तव्यतावगम्यते यागस्य च करणता। एवंच यागकर्तव्यतायां न प्रत्यक्षताविरोधो भविष्यति। तस्मात्कर्मोपदेशः स्यात्। कर्म स्वर्गं प्रत्युपदिश्यते न स्वर्गः कर्म प्रति। किमतो यदि स्वर्गो नोपदिश्यते। एतदतो भवति न ह्यनुपदिष्टोऽनर्थप्राप्तश्च गुणो भवति तस्मात्स्वर्गः प्रधानतः कर्म गुणतः। इति। अपिच यस्य स्वर्ग इष्टः स्यात्स यागं निर्वर्तयेत—इति मतं—ततः स्वर्गो भवतीति संबन्धादिदं गम्यते इति। न शब्दप्रमाणकानामन्तरेण शब्दमवगतिर्न्याय्या। वाक्यादेवास्मादिमं संबन्धमवगच्छामः। यथा काष्ठान्याहर्तुकामोऽरण्यं गच्छेदिति यदि ब्रूयात्,ब्रूयादेतत् दृष्टं तत्र प्रमाणान्तरेणारण्यगमनस्य काष्ठाहरणसामर्थ्यमिति। अथ मन्यते—उपदेशानर्थक्यं मा भूदित्यर्थापत्तिर्भविष्यतीति। उच्यते, नोपदेशानर्थक्यस्यैतत्सामर्थ्यं, यदन्तरेण फलवचनं यागस्य प्रीतिः फलमवगम्येत। काममस्यानर्थक्यं भवतु न जातुचित्सामर्थ्यमस्य जायते। नहि दग्धुकामस्योदकोपादानमसति दाहेऽनर्थकमिति दहनशक्तिमस्य जनयेत्। अथवा स्वर्गकामस्य यागो विधीयत इति पक्षान्तरावलम्बनेनास्यार्थवत्ता भविष्यति। नान्वितरस्मिन्नपि पक्षे स्वर्गकामस्य यागो विधीयते न यागात्स्वर्गः। नैतदेवं तस्मिन्खलु पक्षे स्वर्गं प्रार्थयमानस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते। इति न दोषः। तदनुष्ठानं स्वर्गं प्रतीति नास्ति वचनमितिचेत्। इष्टमर्थं प्रत्यनुष्ठानं भवति, स्वर्गकामस्य च स्वर्ग इष्टः,तदनुष्ठानविशेषग्रहणार्थमेव स्वर्गकामविशेषणग्रहणमिति निरवद्यम्।तस्मात्स्वर्गकामस्य यागकर्मोपदेशः स्यात्। अतः स्वर्गः प्रधानतः कर्म गुणतः। इति स्वर्गकाम-

मधिकृत्य यजेतेति वचनम् । इत्यधिकारलक्षणमिदं सिद्धं भवति । इति ॥ **विध्युद्देशस्थेति** । विध्युद्देशो विधिवाक्यं स्वर्गकामो यजेतेति । तत्रत्यस्वर्गशब्दस्येत्यर्थः । [ पृ. १९ ] **सन्दिग्धेषु वाक्यशेषादिति** । अयं न्यायो जैमिनीये प्रथमाध्याये चतुर्थपाद ऊनत्रिंशत्सूत्रे । तत्र ह्यधिकरणे 'अक्ताः शर्करा उपदधाति' इति विषयवाक्यम् । तदर्थः—अञ्जनसंस्कृतान्मृत्तिकाक्षुद्रपाषाणांश्चिनोति । तत्र केनाक्ता इति भवति संशयः । तेजो वै घृतमिति वाक्यशेषभूतार्थवादवाक्याद् घृतेनाक्ता इति निर्णयः । प्रेक्षावान्—विचारपूर्वकारी । **वाक्यशेषावगत इति** । यस्मिन्नोष्णं न शीतमित्यादिना शाबरभाष्य उक्तोपवादस्तेन ज्ञाते। अऽर्थमृत्वागच्छन्ति ततोऽजानित्वागच्छन्तीत्यपि वाक्यशेषो ज्ञेयः । **यववराहादिष्विवेति** । यथा यववराहादिशब्देष्वर्थवादरूपवाक्यशेषान्निर्णयो न लोकप्रसिद्धेः। आर्यम्लेच्छप्रसिध्द्योर्विरोधात् । तथाहि--शास्त्रार्थप्रामाण्याधिकरणं नाम जैमिनीये प्रथमाध्याये तृतीयपादे पञ्चममधिकरणम् । तत्र माधवाचार्यैरधिकरणरत्नमालायामेवं विवृतम् । तथाहि-- 'यवमयश्चरुर्भवति' वाराही उपानहावुपमुञ्चते इति श्रूयते। तत्र यवशब्दमार्या दीर्घशूकेषु प्रयुञ्जते वराहशब्दं च सूकरे । म्लेच्छास्तु यवशब्दं प्रियङ्गुषु वराहशब्दं च कृष्णशकुनौ। तथासति लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेष्वार्यम्लेच्छप्रसिध्द्योः समानबलत्वादुभयविधा अप्यर्था विकल्पेन स्वीकार्या इति प्राप्ते ब्रूमः । शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी प्रत्यासन्नत्वादविच्छिन्नपारम्पर्यागतत्वाच्च । शास्त्रे यवविध्यर्थवाद एवं श्रूयते—यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति । इति । इतरौषधिविनाशकालेऽभिवृद्धिर्दीर्घशूकेषु दृश्यते । नतु प्रियङ्गुषु तेषामितरौषधिपरिपाकात्पूर्वं पच्यमानत्वात् । वराहोपानद्विध्यर्थवादश्चैवं भवति 'वराहं गावोऽनुधावन्ति' इति । गवामनुधावनं शूकरे संभवति नतु कृष्णशकुनौ तस्माद्दीर्घशूकादिर्यवादिशब्दार्थः । **लौकिक इति** । कौशिकानि सूक्ष्माणि वासांसि स्वर्गः । चन्दनानि स्वर्ग इति लौकिकवाक्येषु सुखसाधनत्वरूपगुणयोगात्स्वर्गशब्दप्रयोगः । **शक्त्यन्तरकल्पनेति** । शक्तिर्नामेश्वरेच्छासंकेतः । अन्या शक्तिः शक्त्यन्तरम् । अयंहि शास्त्रविदां समयः । यद्गोहर्यादिशब्देष्वनेकार्थेष्वनेकशक्तिकल्पनम् । अत्रतु गौण्यैव निर्वाहः । लोके प्रीतिमात्रवाची स्वर्गशब्दो वेदे निरतिशयप्रीतिवाचको भवत्विति नचेत्यादिना पूर्वपक्षः । तत्समाधानं—यत्रार्थवादानवगतो वैदिकशब्दानाम-

र्थस्तत्र लोकप्रसिद्ध एवार्थो ग्राह्यस्तथाच लोके स्वर्गो नाम निरतिशयप्रीतिरिति तु न सिद्धमतस्तस्य तथार्थस्वीकारे लोकानवगतार्थकरणं दोषः। किंच वेदे भिन्नोऽर्थो लोके भिन्नोऽर्थस्तेन च शक्त्यन्तरकल्पनामित्यपि दोषः स्यात्तदाह--**निरतिशयत्वांशस्येत्यादिना** । अत्रार्थे मीमांसकसंमतिमाह—**यदेति । मीमांसकैरिति**। शबरादिभिर्भाष्य एतस्यार्थस्य स्पष्टीकृतत्वात्। तच्च भाष्यं पूर्वमेव निर्दिष्टम् । **पार्थशब्दस्येति** । यद्यपि 'पार्थ एव धनुर्धरः' इत्यादिवाक्येषु पार्थशब्दस्यार्जुनरूप एवार्थः प्राचुर्येण गृहीतो न धर्मभीमरूपस्तथापि पृथापुत्रत्वरूपप्रवृत्तिनिमित्तैक्यात्त्रिष्वपि धर्मभीमार्जुनेषु तस्य मुख्योऽर्थो न विहन्यते तद्वदत्रापि यद्यपि सूर्यध्रुवान्तरवर्तिलोकगतसुखविशेषे प्रचुरप्रयोगः । अन्यत्र प्रचुरप्रयोगो नास्ति तथापि सुखवाचित्वरूपार्थस्याविनाशान्मोक्षार्थकोऽपि स्वर्गशब्दो न विरुध्यत इत्यर्थः । अत्र प्रकाशिकायां तदितरपृथापुत्रेष्विति बहुवचनमुक्तं तन्न संगच्छते। अर्जुनभिन्नयोर्द्वयोरेव धर्मभीमयोः पुत्रयोः सत्त्वात् । नकुलसहदेवयोर्माद्रीसुतत्वाच्च । ननु प्रचुरप्रयोगाभावः शक्त्यभावस्य साधकस्तेन न स्वर्गशब्दो मोक्षवाचीत्याशङ्कां निरस्यति—**बर्हिराज्यादिशब्दानामिति** । बर्हिरादिशब्दानां जातिवाचिताधिकरणं नाम प्रथमाध्याये चतुर्थपादेऽष्टममधिकरणम् । तच्चेत्थं विवियते जैमिनीयन्यायमालायाम्—दर्शपूर्णमासयोः श्रूयते 'बर्हिर्लुनाति' 'आज्यं विलापयति' 'पुरोडाशं पर्यग्निकरोति' इति । अत्र बर्हिरादिशब्दानां शास्त्रे सर्वत्र संस्कृतेषु तृणादिषु प्रयोगात् पीलवादिशब्देषु शास्त्रीयरूढिप्राबल्यस्योक्तत्वात् यूपाहवनीयादिशब्दवत्संस्कारवाचिनो बर्हिरादिशब्दा इति चेन्नैवम् । अन्वयव्यतिरेकाभ्यां जातिवाचित्वात् । यत्र यत्र बर्हिरादिशब्दप्रयोगस्तत्र तत्र जातिरित्यस्या व्याप्तेर्लोके वेदे च नास्ति व्यभिचारः संस्कारप्राप्तेर्लौकिके प्रयोगे व्यभिचारो दृश्यते । क्वचिद्देशविशेषे लौकिकव्यवहारो जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते । बर्हिरादाय गावो गता इति। कव्यमाज्यमिति । पुरोडाशेन मे माता प्रहेलकं ददाति इति च तस्माज्जातिवाचिनः। प्रयोजनं तु बर्हिषा यूपावटमवस्तृणाति इत्यत्र विना संस्कारं स्तरणसिद्धिः ॥इति॥ प्रहेलकं नाम क्रीडनकम् । यूपावटो नाम यूपबिलम्। **एकदेशेऽपीति** । आर्यप्रयोगाभावेऽप्येकदेशेऽपि जातिनिमित्ता दृष्टाः शब्दाः सर्वत्र जातिनिमित्ता भवितुमर्हन्तीत्यर्थः । सिद्धमाह—**ततश्चेति**। यद्यपि बर्हिराज्यादिशब्देष्वार्यप्रसिद्धिर्नास्ति तथाप्यनार्यप्रसिद्धिरस्ति

तेन प्रसिद्धेरभावो वक्तुं न शक्यते न तथा स्वर्गशब्दे प्रत्युत स्वर्गशब्दस्य निरतिशयसुखे नियमेनाप्रवृत्तिरेवेत्याशंकते—**नन्विति** । **तद्व्यावृत्त्यैवेति**। सूर्यध्रुवान्तर्वर्तिलोकगतसुखविशेषभिन्नं मोक्षरूपार्थं परिहायैवेत्यर्थः । एवं व्यावृत्तशक्तेरुपगमं विरोधत्रयेणोपोद्बलयति—**अत एवेत्यादिना** । अत एव भिन्नार्थं व्यावृत्य शक्तेरभ्युपगमादेव । **प्रोद्गात्रधिकरण इति** । इदं मीमांसाग्रन्थेषु तृतीयेऽध्याये पञ्चमपादेऽष्टममधिकरणम् ‘ उद्गातॄणां सह सुब्रह्मण्येन भक्षाधिकरणम् ’ इति नाम्ना प्रसिद्धम् । एतदेवं व्याख्यायते जैमिनीयन्यायमालायां माधवाचार्यैः । ज्योतिष्टोमे श्रूयते—प्रैतु होतुश्चमसः प्रब्रह्मणः, प्रोद्गातॄणां, प्रयजमानस्य प्रयन्तु सदस्यानाम् ” ( अस्य विषयवाक्यस्यैवमर्थः—होतुश्चमसः सोमभक्षणपात्रं तं प्रति गच्छतु । एवमेवान्यत्र) इतिवाक्ये प्रोद्गातॄणामित्यत्रैकस्यैव भक्षः । उद्गीथशब्दाभिधेयायाः सामभक्तेरुद्गातर्युद्गातृप्रातिपदिकस्य रूढत्वादित्येकः पूर्वपक्षः । उद्गातॄणामित्यस्य बहुत्वस्यैकस्मिन्नसंभवादुद्गात्रोपलक्षिताः षोडशर्त्विजः सर्वेऽपि भक्षयेयुरिति द्वितीयः। उद्गीथप्रस्तावप्रतिहारान् सामभागानुद्गातृप्रस्तोतृप्रतिहर्तारः प्रयोगकाले गायन्ति । उदुत्कर्षेण गायन्तीति योगेनोद्गातारस्त्रयो भक्षयेयुरिति तृतीयः पक्षः । रूढिर्योगमपहरतीति न्यायादेक एवोद्गाता । तेन च बहुवचनोपपत्तये प्रत्यासन्ना उपलक्ष्यन्ते । प्रत्यासत्तिश्च प्रस्तोतृप्रतिहर्त्रोरिव सुब्रह्मण्यस्याप्यस्ति । सामवेदाध्यायित्वेन सुब्रह्मण्याह्वानरूपे तदीयकर्मण्यप्यौद्गात्रसमाख्यायाः सत्त्वात् । तस्मात्—‘सुब्रह्मण्येन सहिताश्चत्वारः सामगा भक्षयेयुः’ इत्ययमन्त्यः पक्षो भाष्यकारस्याभिमतः । वार्तिककारस्तु—‘ सदसो भक्षणस्थानत्वात्सुब्रह्मण्यस्य सदस्यप्रवेशात्तेन विरहिता अवशिष्टाः सामगा भक्षयन्ति इति तृतीयं पक्षमङ्गीचकार ॥ इति ॥ **एकत्वेनेति** । तेनैकवचनमपेक्ष्यत इत्यर्थः । **बहुवचनार्थबहुत्वासंभवादिति** । बहुवचनान्यथानुपपत्त्या षोडशस्वृत्विक्षु लक्षणा कृता । **स्तोत्रसंबान्धिनामिति** । गीतिविशिष्टं गुणवद्देवतासंबन्धिगुणानां कथनं स्तोत्रम् । **त्रयाणामिति** । अयं वार्तिककृत्पक्षः । त्रयाणां—उद्गातृप्रस्तोताप्रतिहर्तॄणाम् । अस्मिन्पक्षे सुब्रह्मण्यस्य व्यावृत्तिः । **चतुर्णामिति** । अयं भाष्यकृत्पक्षः । चतुर्णाम् उद्गातृप्रस्तोतृप्रतिहर्तासुब्रह्मण्यानाम् । अस्मिन्पक्षे षोडशानामृत्विजां व्यावृत्तिः । [ पृ. १६ ] द्वितीयं विरोधमाह—**तथेति** । **अहीनाधिकरण** इति । इदं जैमिनीये तृतीयाध्याये तृतीयपादे त्रयोदशमधिकरणं

'द्वादशोपसत्ताया अहीनाङ्गताधिकरणम्' इति नाम्ना प्रसिद्धम्। एतदेवं विव्रियते माधवाचार्यैर्जैमिनीयन्यायमालाविस्तरे—ज्योतिष्टोमप्रकरणे श्रूयते 'तिस्र एव सान्हस्योपसदो द्वादशाहीनस्य' इति। एकेनान्हा निष्पाद्यत्वात्सान्हो ज्योतिष्टोमः। दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कर्तव्या होमा उपसदः। तासां द्वादशत्वं प्रकरणबलाज्ज्योतिष्टोमे निविशते। अहीनशब्दश्च तस्मिन्नेव कल्पते। ज्योतिष्टोमस्य निखिलसोमयागप्रकृतित्वेन सर्वेषामङ्गानां तत्रोपदेशे सति तदुपदेशविकलविकृतीनामिव हीनत्वाभावात्। अतो द्वादशत्वत्रित्वयोर्विकल्प इति प्राप्ते ब्रूमः। आवृत्तसोमयागरूपो द्विरात्रत्रिरात्रादिरहर्गणः। तस्मिन्नहीनशब्दो रूढः। यौगिकत्वे तु न हीन इति विगृह्य समासे कृते सत्ययज्ञादिशब्दवदाद्युदात्तः स्यात्। मध्योदात्तस्त्वाम्नायते। रूढिश्च विग्रहनिरपेक्षत्वाच्छीघ्रबुद्धिहेतुः। अतो ज्योतिष्टोमवाचिनः सान्हशब्दाद्भिन्नेयमहीनसंज्ञा ज्योतिष्टोमाद्भिन्नमहर्गणमभिधत्ते। तस्मिन्नहर्गणे षष्ठीश्रुत्या तदुक्तं द्वादशत्वं निवेश्यते। तत्सिद्धये प्रकरणादिदमपनेतव्यम्॥ इति। **व्याकरणस्मृत्येति**। कात्यायनवार्तिकेन। अस्य वार्तिकस्यायमर्थः—क्रतौ वाच्ये समूह इत्यर्थेऽहन्शब्दात्खप्रत्ययो भवति। ततः खप्रत्ययस्य स्थाने 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' पा. सू. ७।१।२ इत्यनेनेनादेशः। ततश्चाहीनशब्दस्याहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः। **सत्र इति**। सत्रं यजमानर्त्विग्भिः संभूय बहुभिरहोभिरनुष्ठीयमानं कर्म। सर्वे होतारः सर्वे यजमाना इति सत्रे यज्ञान्तराद्विशेषः। **योगस्येति**। न हीनोऽहीन इति व्युत्पत्तेरित्यर्थः। **रूढिपराहतत्वेनेति**। रूढिर्योगमपहरतीति न्यायादित्यर्थः। **द्वादशोपसत्ताया इति**। उपसदो नाम दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कर्तव्या होमाः। **अहर्गणविशेषोत्कर्ष इति**। अहर्गणविशेषे क्रतौ ज्योतिष्टोमप्रकरणादुत्कर्ष इत्यर्थः। तृतीयं विरोधमाह—**तथेति**। **व्याकरणस्मृत्येति**। पाय्येत्यादिपाणिनिसूत्रम्। अस्यार्थः—माने वाच्ये पाय्यमिति रूपं निपात्यते। तथा हविषि वाच्ये सान्नाय्यं, निवासे वाच्ये निकाय्यः। सामिधेन्यां वाच्यायां धाय्येति च रूपं निपात्यते। **सामिधेनीमात्रवाचितयेति**। समिध्यते प्रदीप्यतेऽग्निरनयेति सामिधेनी ऋक्। **धाय्याशब्दस्येति**। 'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः। **धीयमानत्वरूपयोगार्थवशेनेति**। धीयतेऽनया धाय्येति व्युत्पत्तेरित्यर्थः। **स्तुति-**

**शस्त्रार्थतयेति** । स्तुतिः—गीतिविशिष्टं गुणवद्देवतासंबन्धिगुणाभिधानम् । स्तोत्रं स्तुतिरिति पर्यायौ । शस्त्र–गुणवद्देवतासंबन्धिगुणाभिधानम् । शंसनं शस्त्रमिति पर्यायौ । स्तोत्रं सामवेदसाध्यम् । शस्त्रमृग्वेदसाध्यम् । **अपि त्विति** । अत्र 'तु' इति निरर्थकं वाक्यालंकारे वा । **पृथुपाजवत्याविति** । अस्य वाक्यस्यायमर्थः–'पृथुपाजा' ऋ. मं. ३ अ. २ सू. २७ मं. ५ 'तं सबाधो' ऋ. मं. ३ अ. २ सू. २६ मं. ६ इति ऋग्द्वयं धाय्ये भवतः । **समिध्यमानवतीमित्यादि** । अस्य वाक्यस्यायमर्थः–समिध्यमानशब्दघटिता ऋक् समिध्यमानवती 'समिध्यमानो अध्वरे' ऋ. मं.३अ. २ सू.२७ मं.४ इत्यादिरूपा समिद्धशब्दघटिता ऋक् समिद्धवती 'समिद्धो अग्ने अहूतः' ऋ. मं. ५ अ. २ सू. २८ मं. ५ इत्यादिरूपा । एतयो ऋचोरन्तरेण मध्ये धाय्याः कर्तव्याः। **पाञ्चमिकाधिकरण इति** । इदं जैमिनीये पञ्चमाध्याये तृतीयपादे तृतीयमधिकरणं 'सामिधेनीष्वागन्तूनामन्ते निवेशाधिकरणम्' इति नाम्ना प्रसिद्धम् । एतच्चैवं विव्रियते जैमिनीयन्यायमालाविस्तरे—दर्शपूर्णमासयोः सामिधेनीषु श्रूयते—एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति । तत्र पठिताः सामिधेन्य ऋच एकादशैव । 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति विधानादावृत्त्या पञ्चदश संपद्यन्ते । अवशिष्टानां षण्णामृचां दशतयीपठितानामागमेन संख्यापूरणं वक्ष्यते तस्य चागन्तोर्मन्त्रस्य सामिधेनीनां श्रूयमाणानां मध्ये निवेशो युक्तः । कुतः । धाय्याशब्दोदितानामागन्तूनां मंत्राणां मध्ये निवेशदर्शनात् । इति चेन्मैवम् । धाय्यानां मध्यदेशस्य विहितत्वात् । 'इयं वै समिध्यमानवती, असौ समिद्धवती यदन्तरा तद्धाय्या' इति श्रूयते । पठितास्वेकादशसु सामिधेनीषु 'समिध्यमानो अध्वरे' इत्यमावृगष्टमी, 'समिद्धो अग्न आहुतः' इत्यसौ नवमी । तयोर्मध्यं धाय्यानां स्थानम् । धाय्यात्वं च न सर्वेषामागन्तुमंत्राणाम् । किंतु केषांचिदेव । 'पृथुपाजवत्यौ धाय्ये' इत्यादिविशेषविधानात् । 'पृथुपाजा अमर्त्यः' इत्यादि ऋग्द्वयमित्यर्थः । न च धाय्यानामिवेतरेषामागन्तूनां मंत्राणां पठितसामिधेनीक्रमविच्छेदेन मध्ये निवेशनाय किंचित्प्रमाणमस्ति । तस्मादागन्तूनामन्ते निवेशः ॥ इति ॥ **रूढेरकल्पनीयत्वादिति** । अस्य सर्वं विरुध्येतेत्यनेन संबन्धः । इति चेदित्यन्तं पूर्वपक्षः । सत्यमित्यादिना समाधानम् । सत्यमित्यर्धाङ्गीकारे । खण्डयितुं योग्या शंकेत्यर्थः । **कर्मज्ञानसमुच्चयेत्यादि** । अत्र

ज्ञानपदेनोपासना ग्राह्या । यतः शंकराचार्याभिप्रायं द्योतयितुमियं पंक्ति-लिखिता । तन्मते ब्रह्मज्ञानस्य कर्मणश्च समुच्चयो न संभवति । **परैरिति** । शंकराचार्यैरित्यर्थः।[पृ. १७]**ब्राह्मणपरिव्राजकन्यायेनेति** । ब्राह्मणा भोजयितव्याः परिव्राजकाश्चेत्यादिवाक्येषु परिव्राजकानां ब्राह्मणान्तर्गत्वेन भोजयितव्यत्वे सिद्धेऽप्यावश्यकताद्योतनार्थं यथा पुनः परिव्राजकग्रहणं तद्वत्स्वर्गापवर्गमार्गाभ्यामित्यत्र स्वर्गपदेनापवर्गग्रहणे सिद्धेऽप्यावश्यकताद्योतनार्थं पुनस्तद्ग्रहणम् । अयमेव न्यायो ब्राह्मणवसिष्ठन्यायो गोबलीवर्दन्याय इति च व्यवह्रियते । **विजिघत्सत्वेति** । अत्तुमिच्छा जिघत्सा विगता जिघत्सा यस्य तद्भावस्तत्त्वम् । **श्रुतिसन्दर्भेति** । श्रुतिगतप्रकरणप्रतिपाद्य इत्यर्थः । **ब्रह्मगुणाष्टकेत्यादि** । अपहतपाप्मत्वविजरत्वविमृत्युत्वविजिघत्सत्वापिपासत्वविशोकत्वसत्यकामत्वसत्यसंकल्पत्वेत्यष्टौ ब्रह्मगुणाः । **अत एवेति** । वैदिकप्रसिद्ध्यैव निर्वाहे पौराणिकप्रसिद्धिस्वीकारस्यानुचितत्वादेवेत्यर्थः । **विध्यन्ताधिकरण इति** । इदं जैमिनीये सप्तमाध्याये चतुर्थपादे द्वितीयाधिकरणं ' सौर्ये चरौ वैदिकेतिकर्तव्यताधिकरणम् ' इति नाम्ना प्रसिद्धम् । तच्चैवं विव्रियते जैमिनीयन्यायमालाविस्तरे—तत्र सौर्ये चरावपेक्षितः प्रधानविधेः शेषोऽङ्गकलापः स्थालीपाकादिगतो लौकिको ग्रहीतव्यः । कुतः । अनिबद्धत्वात् । वैदिकस्तु प्रकरणेन कर्मविशेषे निबद्धः सन्न ततो वियोजयितुं शक्य इति चेन्मैवम् । वैदिके करणे वैदिकविध्यन्तस्य बुद्धिसंनिकर्षात् । यथा प्रकरणेन क्वचिन्निबद्धः । तथा चोदकेनान्यत्रापि निबध्यताम् । किंच ' प्रयाजे प्रयाजे कृष्णलं जुहोति ' इति सौर्ययागविशेषे कृष्णलहोमविधानाय सिद्धवत्प्रयाजोऽनूद्यते । तच्च वैदिकेतिकर्तव्यतायां लिंगम् । तस्माद्वैदिको ग्राह्यः ।। इति ।। विध्यन्तः—अंगकलापः । **अनुपदिष्टेतिकर्तव्यताकास्विति** । यत्रेतिकर्तव्यतानाम कर्तव्यताप्रकारो विहितस्ता दर्शपूर्णमासेष्टय उपदिष्टेतिकर्तव्यताकाः । तद्भिन्नास्तद्विकृतिरूपाः सौर्याप्रभृतयोऽनुपदिष्टेतिकर्तव्यताकाः । ताः सौर्याप्रभृतयः कथं कर्तव्या इतीतिकर्तव्यताकांक्षा तत्र भवति । **वैतानिकेत्यादि** । वितानो नामाग्नीनां विस्तरः । ते चाग्नयः—गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याख्यास्तत्र भवं वैतानिकं कर्म । अथवा वितानो यज्ञः । वितान एव वैतानिकम् । विनयादित्वात्स्वार्थे ठक् । यज्ञकर्मेत्यर्थः । तच्च त्रय्या वेदत्रयेण विहितम् । **उपतिष्ठत इति** ।

प्रकृतिवद्विकृतिः कर्तव्येति न्यायात्। सर्वासां हीष्टीनां दर्शपूर्णमासौ प्रकृतिः। **शास्त्रदीपिकायामिति**। अयं पार्थसारथिमिश्रकृतो मीमांसाशास्त्रविषयको ग्रन्थः। **वैदिकीति**। पूर्वोक्ताधिकरण इयं कारिकोपलभ्यते। वैदिकस्य तु कर्मणः कथंभावापेक्षायां वैदिक एवेत्थंभावः शीघ्रमुपतिष्ठते। तदतिक्रमेणानुपस्थितलौकिकग्रहणमयुक्तमित्यर्थः। सर्वत्र वैदिकप्रसिद्धिस्वीकारे दोषं शङ्कते—**न चेत्यादिना**। पूर्वपक्षिणो ह्ययमाशयः—यदि लौकिकस्य वैदिके कदापि नैव प्रवेशस्तर्हि लौकिकयूपस्पर्शे कथं 'यद्येकं यूपम्' इत्यादिना वैदिकमंत्रेण प्रायश्चित्तं विधीयते। वैदिके प्रायश्चित्ते त्वदुक्तरीत्या वैदिकयूपस्यैवापेक्ष्यमाणत्वात्। तत्रापि वैदिको यूपो ग्राह्य इति वक्तुं न शक्यते लौकिके दोषसंयोगादित्यादिना लौकिकयूपग्रहणस्यैव सिद्धान्तितत्वात्। यद्येकं यूपमिति मन्त्रस्यायमर्थः—एकं लौकिकं यूपं स्पृशेच्चेत्कश्चित्तेन 'एष ते वायो' इति मंत्रो जप्यः। **नावमिकाधिकरण** इति। इदं जैमिनीये नवमाध्याये तृतीयपादे चतुर्थमधिकरणं 'अग्निषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम्' इति नाम्ना प्रसिद्धम्। तदेवं विव्रियते जैमिनीयन्यायमालाविस्तरे—ज्योतिष्टोमेऽग्नीषोमीयपशुप्रकरणे यूपस्पर्शस्य प्रायश्चित्तमाम्नातम्। 'यद्येकं यूपं स्पृशेत्, 'एष ते वायो' इति ब्रूयात् इति। तदिदमुच्छ्रयणाञ्जनादिकालीने वैदिकस्पर्शे भवति। कुतः। तत्प्रकरणादिति चेन्मैवम्। यूपो वै यज्ञस्य दुरिष्टमामुंचते। यद्यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुंचेत्। तस्माद्यूपो नोपस्पृशः।' इति प्रतिषिध्य पश्चात्प्रायश्चित्ताम्नानात्। प्रतिषेधश्च लौकिकस्पर्शविषयः। वैदिकस्य विहितत्वात्। तस्माल्लौकिके स्पर्शे प्रायश्चित्तम्॥ इति॥ **यूपो वै यज्ञस्येति**। अतः परं समाधानम्। यूपो वै यज्ञस्येत्यादेरयमर्थः। यूपो यज्ञस्य पापमात्मनि स्थापयति तस्माद्यूपस्पर्शो न कर्तव्यः। **प्रतिषिद्धप्रायश्चित्तेत्यादि**। अयमर्थः—प्रतिषिद्धस्य स्पर्शस्य निमित्तेन जायमानस्य पापस्य परिहारार्थं प्रायश्चित्तं तच्च साकांक्षं विषयमाकांक्षते स च विषयो लौकिकयूपस्पर्शः। एवंच तत्रानायत्या लौकिकयूपग्रहणं कर्तव्यं भवति वैदिकविषयत्वाभावात्। तथापि यत्र वैदिकविषयस्य संभवो बाधकं च नास्ति तत्रावश्यं वैदिकप्रसिद्धिरेव ग्राह्या। अत एव पूर्वोक्तविषये वैदिकप्रसिद्धिस्वीकारादेव। [पृ. १८] **निर्णीतामिति**। इदं जैमिनीये तृतीयाध्याये चतुर्थपादे चतुर्दशेऽधिकरणे 'वैदिकाश्वप्रतिग्रह इष्टिकर्तव्यताधि-

करणम् ' इति नाम्ना प्रसिद्धे निर्णीतम् । तच्चैवं विव्रियते जैमिनीयन्यायमालाविस्तरे । इदमाम्नायते ' यावतोऽश्वान्प्रतिगृण्हीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत् ' इति । तत्र ' प्रतिग्रहशब्दो दानपरः ' इत्यनन्तरमेव वक्ष्यते । तत्र विशेषाश्रवणाल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टिरित्येकः पक्षः । ' न केसरिणो ददाति ' इति स्मृत्या मित्रदायादादिभ्यः प्रीत्या क्रियमाणं लौकिकमश्वदानं निषिद्धम् । तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिः । इति द्वितीयः पक्षः । ' वारुणो वा एतां गृण्हाति योऽश्वं प्रतिगृण्हाति ' इत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते । नच लौकिकस्याश्वदानस्य तद्धेतुत्वं प्रमितम् । वैदिकस्य तु जन्मान्तरविषयं दोषश्रवणम् । अतो वैदिकदाने सेष्टिः प्रायश्चित्तम् । अस्ति हि वैदिकमश्वदानम् ' वडवा दक्षिणा ' इत्यादिश्रवणात् ॥ इति ॥ **सूत्र इति** । अस्य सूत्रस्यायमर्थः—अग्निर्ज्योतिरित्यादिना प्रतिपादितोऽहरादिकालविनियोगोऽनावृत्तये स्मर्यते । स्मार्ते चैते योगसांख्ये न श्रौते । **स्मार्तस्य वेदान्तेनेति** । स्मृत्युक्तपदार्थो वेदान्तेन प्रत्यभिज्ञातः शंकराचार्यैरिति प्रकाशिकाकृदभिप्रायः । वस्तुतस्त्वस्मिन्सूत्रे शंकराचार्यास्तथा न प्रतिपादयन्ति प्रत्युत विपरीतम् । तत्प्रतिपादनं स्मृतौ वेदान्तोक्तकालस्य प्रत्यभिज्ञानमिति । स्पष्टं चैतदग्रिमभाष्यनिर्देशात् । तथाहि—अतो विषयभेदात्प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः । ननु ' अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । ' ' धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ' भ. गी. ८।२४।२५ इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति । उच्यते । ' तं कालं वक्ष्यामि ' भ. गी. ८।२३ इति स्मृतौ कालप्रतिज्ञानाद्विरोधमाशंक्य परिहार उक्तः । इति । मुख्यं वेत्यादिना प्रतिपादितस्याधिकरणस्य प्रवृत्तिस्थलं दर्शयति—**मुख्यं वेत्यादिना** । अधिकरणार्थः पूर्वमस्मिन्नेव प्रघट्टक उक्तः। **नहीति** । अल्पवैगुण्येऽल्पदोषे संभवति सति प्रयोगवचनं प्रयोगानुष्ठापकं **शास्त्रं** बहुवैगुण्यं दोषबाहुल्यं न सहत इत्यर्थः । जघन्यानां—दोषाणाम् । **भूयसां स्यात्सधर्मत्वमिति** । एतत्संपूर्णसूत्रमित्थम्—' विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्' एतत्सूत्रात्मकं जैमिनीये द्वादशाध्याये द्वितीयपादे सप्तममधिकरणम् 'प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणमिति नाम्ना प्रसिद्धम् । तच्चेत्थं विव्रियते जैमिनीयन्यायमाला-

विस्तरे । तथाहि—पंचदशरात्रस्याग्निष्टुत्प्रथममहः । तस्यैकाहरूपोऽग्निष्टुत्प्रकृतिः । तत्रोपसत्कालीनसुब्रह्मण्याह्वानार्थमियमाग्नेयी विहिता । तदेतद्विकृतिरूपे प्रथमेऽहनि चोदकतः प्राप्नोति । इतरेषु चतुर्दशस्वहःसु स्वस्वप्रकृत्यनुसारेणैन्द्री प्राप्ता । उपसत्कालीनायाश्च सुब्रह्मण्याया अहर्गणेषु तंत्रं निर्णीतम् । तथा सत्यत्रोपसत्कालीनसुब्रह्मण्यायामाग्नेय्यैन्द्योः कलहप्राप्तावसंजातविरोधितया प्रबलस्य प्रथमस्यान्ह आनुगुण्येनाग्नेयी कार्या । इति प्राप्ते ब्रूमः । बहूनामन्हामनुग्रहायैन्द्री कार्या । ‘ त्यजेदेकं कुलस्यार्थे ’ इति न्यायेन बहुत्वमपि प्राबल्यकारणम् । इति । शबराचार्यरीत्या पूर्वमुक्तम् । **प्रतर्दनविद्यायामिति** । कौषीतक्युपनिषदीयं विद्या । प्रक्रमः—प्रारंभः । **प्राणस्तथानुगमादिति** । अस्य सूत्रस्यायमर्थः—अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम् । अपि तु जीवादर्थान्तरभूतं परं ब्रह्म । “स एष प्राण एव प्रज्ञात्मानंदोऽजरोऽमृतः” कौ. ३।८ इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते ॥१९॥

१।१।२०

[ शाङ्करभाष्यम् ] ( पृ. १८ ) पितृसौमनस्यादिस्वर्गलोकपर्यंतं यद्वरद्वयसूचितं कर्मकाण्डप्रतिपाद्यमात्मन्यारोपितं संसाररूपमेव । अधुना तन्निवर्तकमात्मज्ञानं बोध्यत एवमध्यारोपापवादात्मकः पूर्वोत्तरग्रन्थसम्बन्ध इत्याह—**एतावद्धीति** । एतावदेवेत्यर्थः । विधिप्रातिषेधार्थेन—प्रवृत्तिनिवृत्त्यर्थकेन । **मन्त्रब्राह्मणेनेति** । उपनिषद्व्यतिरिक्तेनेति शेषः । **अत इति** । यतो निवृत्तिबोधकता कर्मकाण्डस्य नास्त्यतः । **विधिप्रतिषेधार्थविषयस्येति** । ‘ अहरहः सन्ध्यामुपासीत ’ इति विधिः । ‘ न कलञ्जं भक्षयेत् ’ इति प्रतिषेधः । यागात्मिका क्रिया । ऋत्विग्घविरादि कारकम् । स्वर्गादि फलम् । क्रियाकारकफलादीत्यादिशब्देन प्रमातृप्रमेयादीनां ग्रहणम् । **आत्यन्तिकनिःश्रेयसप्रयोजनमिति** । बहुव्रीहिः । तद्विपरीतब्रह्मात्मैकत्वविज्ञानमित्यस्य विशेषणम् । आत्यान्तिकनिःश्रेयसं सवासनाविद्यानिवृत्तिपूर्वकानन्दावाप्तिरूपो मोक्षः प्रयोजनं यस्य । ( पृ. १९ ) अकृतार्थत्वं—अकृतकार्यत्वम् । पूर्वस्मात्—पूर्वकाण्डोक्तात् । कर्मगोचरात्—कर्मसाध्यात् । तन्निन्दार्थं—कर्मनिन्दार्थम् । निन्दाया उपयोगः कर्मनिवृत्तौ । **मनुष्य इति** । इदं सर्वप्राणिनामुपलक्षणम् । **संशय इति** । मनुष्ये मृत आत्माऽस्ति न वेति प्रथमा विप्रतिपत्तिः । **शरीरव्यतिरिक्त इन्द्रियव्यतिरिक्तो मनोव्यति-**

रिक्तो बुद्धिव्यतिरिक्तो वात्मास्ति नवेति तदनंतरस्था विप्रतिपत्तयः। स आत्मा कर्तृत्वभोक्तृत्ववानस्ति नवेति विप्रतिपत्तिरपि ज्ञेया। अन्यत्र धर्मादित्याद्युक्तेः।देहादिव्यतिरिक्तस्यात्मनः प्रत्यक्षत्वाभावान्न प्रत्यक्षेण निर्णयः। तथा परलोकसंबन्ध्यात्मदर्शकलिङ्गाभावान्नानुमितिरपीत्याह—**न प्रत्यक्षेणेत्यादि**। एतत्—आत्मास्तित्वम्। **तृतीय इति**।पाठक्रमापेक्षयेत्यर्थः२०

[प्रकाशिका] [पृ. १९] याथात्म्यं—स्वरूपम्। विनिर्मुक्तिः-मोक्षः। अस्त्यात्मिका—अस्ति मनुष्ये प्रेत आत्मेति स्वरूपिणी। नास्त्यात्मिका—नास्ति तदात्मेति स्वरूपिणी। **काचिदिति**। विज्ञानवादिमतमेतत्। वित्तिमात्रस्य—विज्ञानस्वरूपस्य। विज्ञानवादिमतं विवेकविलास एवमभ्यधायि। बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम्। आर्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात्॥ दुःखमायतनं चैव ततः समुदयो मतः। मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः॥ दुःखं संसारिणः स्कंधास्ते च पञ्च प्रकीर्तिताः। विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च॥ पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम्। धर्मायतनमेतानि द्वादशायतनानि तु॥ रागादीनां गणोऽयं स्यात्समुदेति नृणां हृदि। आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः पुनः॥ क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा। स मार्ग इति विज्ञेयः सच मोक्षोऽभिधीयते॥ प्रत्यक्षमनुमानं च प्रमाणाद्वितयं तथा। चतुष्प्रास्थानिका बौद्धाः ख्याता वैभाषिकादयः। अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते। सूत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः॥ आकारसहिता बुद्धिर्योगाचारस्य संमता। केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः॥ रागादिज्ञानसन्तानवासनोच्छेदसंभवा। चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता॥ इति। आर्हतमतमाह—**अन्य इति**। तन्मते हि सम्यग्दर्शनेनाविद्यास्तमयो मोक्षमार्गः। एतन्मतं च सर्वदर्शनसंग्रह इत्थमभ्यधायि। रत्नत्रयपदवेदनीयतया प्रसिद्धं सम्यग्दर्शनादित्रितयमर्हत्प्रवचनसंग्रहपरे परमागमसारे निरूपितं—सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति। विवृतं च योगदेवेन येन रूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेणार्हता प्रतिपादिते तत्त्वार्थे विपरीताभिनिवेशरहितत्वाद्यपरपर्यायं श्रद्धानं सम्यग्दर्शनं तथाच तत्त्वार्थसूत्रं—तत्त्वार्थं श्रद्धानं सम्यग्दर्शनमिति। अन्यदपि। रुचिर्जिनोक्ततत्त्वेषु सम्यक्श्रद्धानमुच्यते। जायते तन्निसर्गेण गुरोरधिगमेन वा॥ इति॥ परोपदेशनिरपेक्षमात्मस्वरूपं निसर्गः। व्याख्या-

नादिरूपपरोपदेशजनितं ज्ञानमधिगमः । येन स्वभावेन जीवादयः पदार्था व्यवस्थितास्तेन स्वभावेन मोहसंशयरहितत्वेनावगमः सम्यग्ज्ञानम् । यथोक्तम्—यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा । योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः ॥ इति ॥ तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनःपर्यायकेवलभेदेनेति ॥ सांख्यमतमाह—पर इति । एतन्मतं संक्षेपेणेत्थम् । सत्त्वरजस्तमोगुणानां साम्यावस्था, अव्यक्ताख्या प्रधानाख्या वा सर्वस्य जगतो मूलप्रकृतिः । सा चैकैव । पुरुषास्तु बहवस्तेच कूटस्था नित्या अपरिणामिना नित्यचैतन्यस्वभावाः । ते च पङ्गवः अपरिणामित्वात् । प्रकृतिस्त्वन्धा जडत्वात् । यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात्परिणामं लभते । तस्याश्चाद्यः परिणामो बुद्धिरन्तःकरणविशेषः । सैव महत्तत्त्वम् । साच दर्पणवत्स्वच्छा । तस्याश्च बहिरिन्द्रियद्वारा विषयाकारो यः परिणामविशेषो घट इति पट इत्याकारस्तज्ज्ञानं वृत्तिरिति चाख्यायते । स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहादहं जानामीति योऽभिमानविशेषः सैवोपलब्धिः। स्रक्चन्दनादिविषयसंनिकर्षादिन्द्रियद्वारैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः । अत एव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माः सर्व एव बुद्धेः परिणामविशेषाः सूक्ष्मांशेन प्रकृतावेव वर्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च । पुरुषस्तु पुष्करपलाशवन्निर्लेपस्तथापि बुद्धौ प्रतिबिम्बते । तत्त्वानि तु पञ्चविंशतिः । मूलप्रकृतिरविकृतिर्महदाद्या प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति सांख्यकारिकोक्तानि । अद्वैतवादिमतमाह—अपर इति । तद्भावलक्षणं—जीवस्य परमात्मभावलक्षणम् । विशिष्टाद्वैताभिधं स्वमतमाह—त्रय्यन्तनिष्णाता इति । त्रयी ऋगादिवेदत्रयी तदन्ता उपनिषदो वेदान्तपदवाच्यास्तत्र निष्णाताः । एतेनास्य मतस्य ग्राह्यता प्रदर्श्यते । अशेषाः संपूर्णा ये हेयास्त्याज्यगुणास्तत्प्रत्यनीका विरुद्धा अनन्तज्ञानानन्दादयो गुणास्तदेकस्वरूपस्य । प्रकारभूतस्य—विशेषणभूतस्य गौणस्येति यावत् । उपेयं—प्राप्यम् । उपेता—प्राप्ता । श्रुतप्रकाशिकायां—एतन्नामकश्रीभाष्यटीकायाम् [ पृ. २० ] कण्ठोक्तः—प्रत्यक्षमुच्चारितः । अर्थसिद्धः—अर्थाज्ज्ञायमानः । तदनुबन्धिज्ञानापेक्षं—उपासनज्ञानापेक्षम् । अन्यथा—जीवस्वरूपमात्रपरत्वे । असंभवादिति । जीवज्ञानस्य सुलभत्वात्तदर्थं प्रलोभनादीना-

मनपेक्षेति भावः । स्वयूथ्यमतमनुवदति—केचित्त्विति 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' ब्र.सू.२।३।५इति ब्रह्मसूत्रस्थतिरोहितमित्यस्य तिरोधानं प्राप्तमित्यर्थः । उपसर्जनतया—गौणत्वेन । तदेव तिरोधानं 'देहयोगाद्वा सोऽपि ' इत्यग्रिमसूत्रे सोऽपीति पुंलिङ्गघटिततच्छब्देन परामृश्यते । अन्यत्रापि गुणीभूतस्य परामर्शो दृश्यत इत्याह—गुहां प्रविष्टावित्यादि । गुणीभूतस्य परामर्शे प्रमाणमाह—**सर्वनाम्नेत्यादि** । अयंपदेन—नायमस्तीत्ययंपदेन । व्याहतार्थकं—मम जननी वन्ध्येतिवद्व्याघातयुक्तम् । [पृ. २१ ] **चरमशरीरवियोग इति** । अयं चरमशरीरवियोगो ब्रह्मरूपाविर्भावात्पूर्वमस्ति नवेति संशयस्य सुखेन प्रतिपादयितुं शक्यत्वादित्यर्थः ॥ २० ॥

१ । १ । २१

[शांकरभाष्यम् ] [पृ.२१] देवैरत्रापि विचिकित्सितमित्यादिकं प्रश्नानर्हमुत्तरं किमर्थं तदाह—**कियमामिति** । एकान्ततः—निश्चयेन । अपिशब्दो भिन्नक्रम इति द्योतयति—**देवैरपीति** । पुरा-सृष्टिकाले । ननु "नाणुरतच्छ्रुतेः" ब्र. सू. २।३।२१ इति सूत्रेणात्मनोऽणुत्वं निषिध्यते तत्कथमणुत्वमत आह-**सूक्ष्म इति** । दुर्ज्ञेय इत्येवाणुशब्दस्यार्थः । अतोऽन्यं—आत्मनो भिन्नम् । अधमर्ण—धनस्य प्रतिनिवर्त्यमानस्य प्रतिग्रहीतारम् । उत्तमर्णः—पूर्वोक्तधनस्य दाता । उत्तमं हि दातुर्ऋणं यतस्तद्वृध्द्या सहितं प्राप्यते । पूर्वस्य त्वधमं यतो न्यूनं गृहीत्वाधिकं देयं तेन ॥ २१ ॥

[प्रकाशिका] [पृ.२१]**पतयालव इति** । पतयालुः पतनशीलः । मध्य एव भ्रष्टबुद्धये ज्ञानं नोपदेष्टव्यम् ॥ २१ ॥

१ । १ । २२

[ शांकरभाष्यम् ] **अन्विष्यमाणोऽपीति** । यद्यपि यमादन्ये ब्रह्मविदः स्युरस्मिंल्लोके तथापि विनायासेन लब्धं यमं मुक्त्वा किमित्यन्यत्र गमनायास इत्यपि बोध्यम् ॥ २२ ॥

१ । १ । २३

[शांकरभाष्यम्] [पृ.२२]**प्रलोभयान्निति** । अयं लोभवशश्चेन्नाधिकारीति बुध्द्या । **हस्ती हिरण्यं चेति** । जात्येकत्वादेकवचनम् । इन्द्रियपाटवाभावे जीवनस्य नैरर्थक्यामित्यत आह-**समग्रेन्द्रियकलापमिति** । **यावदिच्छसीति**। यद्यपि पुरुषायुषं शतसंवत्सरात्मकं श्रुतिनिर्दिष्टं तथापि मद्वरसामर्थ्यात्त्वं यावदिच्छं जीवनं लभस्व ॥ २३ ॥

[ प्रकाशिका ] [ पृ. २२ ] दुरधिगमतया—दुर्ज्ञेयत्वात्। **नंक्ष्यतीति**। **आत्मज्ञानाद् भ्रष्टो भवेदित्यर्थः** ॥ २३ ॥

१ । १ । २४

[ **शांकरभाष्यम्** ] **एधीति** । अस्भुवीतिधातोर्लोण्मध्यमपुरुषैकवचनम्। तत्कर्तृपदमाह—**राजेति** । **दिव्यानामिति** । रंभोर्वशीकल्पवृक्षकामधेन्वादयो दिव्यकामाः । स्रक्चन्दनवनितादयो मानुषकामाः । **कामभागिनमिति** । काम्यन्त इति कामा विषयास्तद्भागिनं तदुपभोगसमर्थमित्यर्थः । विषयसत्वेऽपि शरीरादिसामर्थ्याभावात्तदुपभोगसामर्थ्यं बहूनां न दृष्टम् । ननु प्रारब्धकर्माभावे भोगदाने कुतस्तव सामर्थ्यमत आह—**सत्यसंकल्प इति** । तदपि सत्यसंकल्पत्वं कुत इत्याह--**देव इति**। देवत्वमप्रतिहततेजोवीर्यबलसंपन्नत्वम्२४

१ । १ । २५

[ **शांकरभाष्यम्** ] [ पृ. २३ ] वादित्रं—हस्तवाद्यम् । **काकदन्तपरीक्षारूपमिति** । काकस्य कति वा दन्ता मेषस्याण्डं कियत्पलम् । गर्दभे कति रोमाणीत्येषा मूर्खविचारणेत्युक्तेर्विफला काकदन्तपरीक्षा तद्वदेतादृशप्रश्नोऽपि निरर्थक इत्यर्थः ॥ २५ ॥

[ प्रकाशिका ] [ पृ. २३ ] ननु मरणशब्दस्य मुक्तिवाचकत्वं कथमित्यत आह—**मरणशब्दस्येति** । येयं प्रेते विचिकित्सेत्यादिनोक्तत्वान्नेदं प्रकरणं मरणस्य किन्तु मुक्तेस्तदनुरोधात्तादृशार्थकरणं न दोषावहमिति भावः ॥ २५ ॥

१ । १ । २६

[ शांकरभाष्यम्] महाह्रदः—अगाधह्रदः । **अक्षोभ्य इति**। विषयैरनतिक्रमणीयचेता इत्यर्थः । वैराग्यसंपन्न इति यावत् । श्वोभावा इति अनित्या इत्यर्थः । किंचानित्या अपि ते विषयाः स्वास्थितिदशायां पुरुषं नोपकुर्वन्ति । किन्तु इन्द्रियतेजःक्षयद्वारा तदनपकारिण एवेत्याह—**किंचेति** । धर्मः—इष्टापूर्तादिः। वीर्यं—बलम्। प्रज्ञा—शास्त्रार्थालोडनशक्तिः । तेजः—प्रागल्भ्यं त्वग्गतकान्तिर्वा। **क्षपयितृत्वादिति** । विनाशकत्वादित्यर्थः। चापीति समुच्चये । ब्रह्मणोऽपि—हिरण्यगर्भस्यापि । हिरण्यगर्भायुपि सर्वायुषामन्तर्भावात् । दीर्घजीविका—दीर्घजीवनम् ॥ २६ ॥

[ प्रकाशिका ] त्वदुपन्यस्ताः—त्वया निर्दिष्टाः । सर्वेन्द्रियदौर्बल्यावहाः—सर्वेन्द्रियकार्श्यकारिणः ॥ २६ ॥

१ । १ । २७

[ शांकरभाष्यम् ] **दृष्टवन्त इति** । त्वद्दर्शनस्यैव फलं वित्तप्राप्तिः । मया तु तव संगतिर्भाषणमपि चाधिगतं तेन वित्तप्राप्तिः स्यादिति किं वक्तव्यं [ पृ.२४ ] **याम्ये पद इति** । स्थित्वेति शेषः । ईशिष्यसीति परस्मैपदमार्षम् । यमलोके स्थित्वा पुण्यपापनियामकः स्या इत्यर्थः । **कथं हीति** । हिशब्दः प्रसिद्धार्थकः । तथाच देवदर्शनादिना समीहितप्राप्तिरिति श्रुतिस्मृतिप्रसिद्धम् ॥ २७ ॥

[ प्रकाशिका ] **दृष्टचरीति** । पूर्वं दृष्टा भूतपूर्वे चरट् । जातु—कदाचित् । **न्यायादितीति** । इति भारतोक्तश्लोकोरीत्येत्यर्थः । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते । इत्युत्तरार्धमस्य श्लोकस्य [ पृ. २४ ] मया दीर्घजीवितरूपवरस्याप्रदाने कथं त्वं जीविष्यसीत्यत आह—**न हीति** ॥ २७ ॥

१ । १ । २८

[ शांकरभाष्यम् ] उत्कृष्टपुरुषार्थलाभे संभवति निकृष्टं प्रार्थयमानोऽहं विचारमूढः स्यामतोऽपि स एव मे वर इत्याह—**यतश्चेति** । तात्पर्येण—तदासक्ततया । ततोऽधिकतरं दुष्प्रापमपि पुरुषार्थं प्राप्तिपायषुः क्व तदास्थो भवेदित्यन्वयः । प्रापिपयिषुः—प्रापयितुमिच्छुः। तात्पर्यार्थमाह-**न कश्चिदिति** । बुभूषति—भवितुमिच्छति । उच्चैःपदाकाङ्क्षी सर्वो जन इत्यर्थः । **तस्मादिति** । यस्मादहं विवेकी तस्मादित्यर्थः । वर्णः-गीतिः । रतिः—क्रीडा । प्रमोदः-तदुभयजन्यं सुखम् । निरूपयन्—उत्पत्तिस्थितिनाशवन्तस्ते वर्णादय इति विचारयन् ॥ २८ ॥

[ प्रकाशिका ] एतद्भाष्यमूले ‘ अनतिदीर्घे जीविते को रमेत ’ इति पाठः । स एवैतद्भाष्यकृत्संमतः । अत्यल्प ऐहिके जीवित इति व्याख्यानात् ॥ २८ ॥

१ । १ । २९

[ शांकरभाष्यम् ] [पृ.२५] **श्रुतेर्वचनमिति** । एतं परलोकविषयं वरं हित्वा नाचिकेता नान्यं वरं वृणीत इति श्रुतेः कथनम् । अत्र मन्त्रे यमनचिकेतःसंवादो नास्तीति भावः । अत्र ‘ नचिकेतसं विषयीकृत्यान्यस्याप्यधिकारनिर्णयार्थं संवादरहितं श्रुतेर्वचनमित्यादि यद्गोपालयतीन्द्रैर्लिखितं तत्तु चिन्त्यम् ॥ २९ ॥

अथ कठोपनिषदि प्रथमाध्याये द्वितीया वल्ली ।

१ । २ । १

[शांकरभाष्यम्] श्रेयःप्रेयोविभागं विद्याविद्याविभागं च प्रदर्श्याविद्यां हित्वा केवलविद्याभीप्सिनं शिष्यं प्रथमं स्तौतीत्याह—**परीक्ष्येति** । **अवगम्येति** । तस्मिन्निति शेषः । **पृथगेवेति**। प्रेयसः श्रेयो भिन्नमेवेत्यर्थः । निःश्रेयसं-मोक्षः। अत्रायुर्वै घृतमितिवल्लक्षणया निःश्रेयसपदेन तत्साधनभूतं ज्ञानं ग्राह्यम् । प्रेय उताप्यन्यदेवेत्यन्वयः। **प्रियतरमपीति** । पूर्ववल्लक्षणयाभ्युदयसाधनं ज्योतिष्टोमादि ग्राह्यम् । **भिन्नप्रयोजने इति** । बहुव्रीहिसमासः । भिन्ने स्वर्गमोक्षरूपे प्रयोजने फले ययोस्ते इत्यर्थः । **वर्णाश्रमादिविशिष्टमिति** । इदमधिकृतमित्यस्य विशेषणम् । ब्राह्मणो बृहस्पतिसवेन यजेतेति शास्त्राद्वर्णविशिष्टस्याधिकारः । गृहस्थः सदृशीं भार्यामुपेयादित्याश्रमविशिष्टस्याधिकारः। आदिपदेन वयोऽवस्थादिग्रहणम् । जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति वयोविशिष्टस्याधिकारः । अविचिकित्सितव्याधेरपां प्रवेशो वेत्यवस्थाविशिष्टस्याधिकारः । **बध्नीत इति** । 'षिञ् बन्धने' इति धातुः । ताभ्यां सर्वः पुरुष आत्मकर्तव्यतया प्रयुज्यत इत्यन्वयः । **आत्मकर्तव्यतयेति** । आत्मनि विद्याविद्ययोः कर्तव्यता कृतिसाध्यता तया । विद्या हि साधनचतुष्टयसंपन्नं पुरुषं स्वविषये प्रेरयति अविद्या च वर्णाश्रमादिविशिष्टं तं तथा प्रेरयतीत्यर्थः । **श्रेयःप्रेयसोरिति** । वैपरीत्येनान्वयो न यथासंख्यतया । अभ्युदयार्थी प्रेयसि प्रवर्तते । अमृतत्वार्थी श्रेयसि प्रवर्तत इत्यर्थः । ताभ्यां—विद्याविद्याभ्याम् । **यद्यपीति** । विद्याविद्ये भिन्नपुरुषार्थानुष्ठेयत्वादविरुद्धे अपि स्वरूपविरोधादेव विरुद्धे ते । **सहानुष्ठानुमिति** । तेनैव पुरुषेण भिन्नकाले ते विद्याविद्ये अनुष्ठातुं शक्येते इत्यर्थः । **अदूरदर्शीति** । एतस्यैव व्याख्यानं विमूढ इति विचारविकल इत्यर्थः । उपादत्ते—अनुतिष्ठति ॥ १ ॥

[ प्रकाशिका ] [ पृ. २९ ] मुमुक्षां—मोक्तुमिच्छाम् । परस्परविलक्षणप्रयोजने अन्योन्यविरुद्धफले । पुरुषार्थात्—मोक्षरूपात् ॥ १ ॥

१ । २ । २

[ शांकरभाष्यम् ] [ पृ. २६ ] श्रेयःप्रेयसोः पुरुषायत्तयोः किमिति पुरुषा बाहुल्येन प्रेयसि प्रवर्तन्त इत्याशङ्कामवतरणिकया दर्शयन्ति—**यद्युभे इत्यादिरूपया** । **दुर्विवेकरूपे इति** । इदं श्रेयःसाधनं ज्ञानरूपमिदं

प्रेयःसाधनं यज्ञादिरूपं, इदं श्रेयःफलं मोक्षरूपं नित्यमिदं प्रेयःफलं स्वर्गरूपमनित्यमेतादृशं विवेचनं मन्दबुद्धीनां दुष्करम् । **व्यामिश्रीभूते इवेति** । व्यामिश्रतिलतन्दुलवत् । संमिश्रजलदुग्धयोर्दुग्धं हंसो यथा पृथक्करोति तथा धीरपुरुषः श्रेयः प्रेयसो विविनाक्ति । एतादृशधीरपुरुषः कश्चिदेवेह तेन बहूनां प्रेयस्येव प्रवृत्तिरित्याह—**अतो हंस इवेति** । **गुरुलाघवमिति** । यज्ञादिकर्मानुष्ठाने महानायासः फलं चानित्यं दुःखघटितं ज्ञानाधिगमे त्वनायासो दुःखनिवृत्तिरानन्दावाप्तिश्चेति तारतम्यमिति भावः । धीरः—संकृतबुद्धिः । हीत्यव्ययमवधारणे तदाह—**श्रेय एवेति** । मूलेऽभीत्युपसर्गस्य वृणीत इति तिङन्तस्य च मध्ये प्रेयस इति प्रयोगो 'व्यवहिताश्च' पा. सू. १।४।८२ इति पाणिनिसूत्रात्साधुः । **अभ्यर्हितत्वादिति** । अज्ञानेनाभ्यर्हितत्वं तत्र । **योगक्षेमादिति** । अप्राप्तस्य प्रापणं योगः । प्राप्तस्य परिरक्षणं क्षेमम् । योगश्च क्षेमश्चानयोः समाहार इति समाहारद्वन्द्वः २

[ प्रकाशिका ] [ पृ. २६ ] अभीत्यस्यार्थमाह—अभ्यर्हितमिति । उपचयः—वृद्धिः ॥ २ ॥

१।२।३

[ शांकरभाष्यम् ] बुद्धिमत्ता—विवेचनशीलता । सृतिं—मार्गम् । **मूढजनप्रवृत्तामिति** । मूढजनेषु प्रसृतामित्यर्थः । धनप्रायां—द्रविणप्रचुराम् ॥ ३ ॥

[ प्रकाशिका ] दुःखोदर्कत्वं—दुःखावसानत्वम् ॥ ३ ॥

१।२।४

[ शांकरभाष्यम् ] [ पृ. २७ ] **महतान्तरेणेति** । भूवियतोरिव महदन्तरं श्रेयःप्रेयसोरित्यर्थः । परस्परव्यावृत्तरूपत्वे हेतुमाह—**विवेकाविवेकात्मकत्वादिति** । **विषूचीति** द्विवचनलोपश्छान्दसस्तदाह-विषूच्याविति । **या चेति** । अविद्या कर्मकाण्डे प्रसिद्धा । अविद्वद्बुद्धिप्रलोभिनः-अज्ञमनोवशीकरणसमर्थाः । **विच्छेदमिति** । तवेति शेषः ॥ ४ ॥

[ प्रकाशिका ] [ पृ. २७ ] आहिताग्न्यादिगणे विद्याभीप्सितशब्दस्य पाठाभावं मत्वाह—**छान्दसत्वादिति** । यङ्लुगन्तस्य परस्मैपदित्वादाह—**छान्दसमात्मनेपदमिति** ॥ ४ ॥

१।२।५

[ शांकरभाष्यम् ] विद्यायां प्रवृत्तिसिध्द्यर्थमविद्याधिकारिणोऽधिक्षेपपूर्वकं दर्शयति—**ये त्विति** । संसारभाजः—संसारार्हाः । संसारभाजना इति पाठो

लेखकप्रमादात् । भाजनशब्दस्याजहल्लिङ्गत्वात् । अन्तरे—मध्यदेशे । वेष्ट्यमानाः—बध्यमानाः । पुत्रेत्यादि । पुत्रपश्वादिविषयिण्यस्तृष्णास्ता एव पाशशतानि । धीराः—लौकिकशास्त्रीयप्रज्ञावंतः । एतदेवाह—प्रज्ञावन्त इत्यादिना । ‘ नित्यं कौटिल्ये गतौ ’ पा. सू. ३।१।२३ इत्यनेन गत्यर्थकस्य धातोः कौटिल्यरूपार्थ एव यङ्लुगन्तः प्रयोगस्तदेतन्मत्वाह—कुटिलामित्यादि । अनेकरूपां—उत्तरायणादिरूपाम् । गतिं-मार्गम् । रोगः-धातुवैषम्यम् । रोगादीत्यादिशब्देन मनःपीडादिग्रहणम् । विषमे—कण्टकगर्तादिसहिते । अनर्थे—कण्टकतोदनगर्तपतनादिरूपम् ॥ ९ ॥

[ प्रकाशिका ] निन्दतीति । विद्यायां प्रवेश एवाविद्यानिन्दायाः प्रयोजनम् । वर्णयन्तीति । अयमर्थो धात्वर्थदृष्ट्या न संगत इत्यस्वरसं बोधयति—केचित्त्विवतिपदेन ॥ ९ ॥

१ । २ । ६

[ शांकरभाष्यम् ] अत एव पूर्वोक्तपण्डितम्मन्यत्वादिकारणवशात् । संपराय इति । परा परे काले देहपतनानन्तरं सम्यगीयते गम्यत इत्यर्थः । [ पृ. २८ ] तत्प्राप्तिप्रयोजन इति । तस्य परलोकस्य प्राप्तिः प्रयोजनं फलं यस्येत्यर्थः । सांपराय इत्यस्य विशेषणम् । साधनविशेषः—ॐकारध्यानादिरूपः । शास्त्रीयः—वेदोक्तः । अविवेकिनमिति । पुत्रपश्वादिष्वासक्तमनस्त्वादविवेकः । वित्तमोहेनेति । वित्तनिमित्तो मोहो वित्तमोह इति शाकपार्थिवादित्वात्समासः । मूढमिति वित्तार्जनादौ संसक्तचेतस्त्वेनाविवेकिनमित्यर्थः । एकदा जायमानस्य पुनः पुनर्यमवश्यतानुपपन्नेत्याह—पुनःपुनर्जनित्वेति । प्रबन्धः-प्रवाहः । प्रायेणेति । केचिदेवोपनिषज्ज्ञाने प्रवर्तन्त इति भावः ।

[ प्रकाशिका ] [ पृ. २८ ] विषयाशावशीकृतमनोरथमिति । सर्वेऽपि तस्य मनोरथा विषयविषयका एवेत्यर्थः । मत्क्रियमाणेति । मया प्रेर्यमाणा या यातनेत्यर्थः । उपपत्तिर्द्रष्टव्येति । एतन्मते जगतः सत्यत्वादयं लोको नास्तीति कथमिति चेत्सत्यम् । अस्य लोकस्य मिथ्यात्वाभावेऽपि शिष्टैरपरिग्रहात्तथोक्तिः ॥ ६ ॥

१ । २ । ७

[ शांकरभाष्यम् ] बहुजन्मार्जितसुकृतासादितशुद्धबुद्धिर्वैराग्यादिसंपन्नो यो नचिकेतःसदृशो ब्रह्म प्रत्यक्त्वेन जानाति स पुरुषः सहस्रेष्वपि कश्चिदेव भवतीत्याह—यस्त्विवेति । अभागिन इति । असंस्कृतबुद्धिमत्त्व-

मेवाभाग्यवत्त्वम् । असंस्कृतात्मानः—नित्यनैमित्तिकादिभिरननुष्ठितैरसंस्कृतबुद्धयः । **न विजानीयुरिति** । एवं चात्मा श्रोतुं ज्ञातुं च न लभ्यत इति भावः । **अद्भुतवदिति** । चिन्तामण्याद्याश्चर्यकृद्वस्तुसदृशोऽस्य वक्ता कदाचिदपि लभ्येत न वा लभ्येतेति भावः । अनुशिष्टः—**उपदिष्टः** ॥७॥

[ प्रकाशिका ] **इत्युक्तेरिति** । भगवद्गीतासु । भगवद्वचनमेतत् ॥ ७॥

१ । २ । ८

[ शांकरभाष्यम् ] [ पृ. २९ ] **अवरेण प्रोक्त इति** । श्रुत्यन्तरे श्रोत्रियं ब्रह्मनिष्ठमित्याचार्यस्य ब्रह्मनिष्ठत्वेन वर्णनाच्छास्त्रव्युत्पत्तिरेव वक्तुर्न पर्याप्ता किन्तु ब्रह्मनिष्ठताप्यपेक्षते। **प्राकृतबुद्धिनेति** । प्राकृतेषु पुत्रपश्वादिषु बुद्धिर्ममत्वाभिमानबुद्धिर्यस्येत्यर्थः । **वादिभिरिति** । शून्यवादिव्यतिरिक्तैः सांख्यादिभिरात्मास्तीति चिन्त्यते । शून्यवादिभिश्च स नास्तीति । कर्ता अशुद्ध इति सांख्यभिन्नैर्वादिभिश्चिन्त्यते । वेदान्तिभिः सोऽकर्ता शुद्धो ब्रह्माभिन्नश्चेति चिन्त्यते । **अनन्यप्रोक्त इति** । अनन्यो ब्रह्मणः सकाशादभिन्न आचार्यस्तेन प्रोक्ते । अपृथग्दर्शिना—अभेददर्शिना । **प्रतिपाद्यब्रह्मात्मभूतेनेति** । बोध्यब्रह्मस्वरूपेण जीवन्मुक्तेनेत्यर्थः । **सर्वविकल्पेत्यादि** । सर्वे च ते विकल्पाश्च सर्वविकल्पास्तद्विषया गतयश्चिन्ताः प्रत्यस्तमिता लीना यस्मिंस्तस्य भावस्तत्त्वं तस्मात् । आचार्यपदमध्याहृत्यानन्यप्रोक्त इत्यस्यार्थान्तरमाह—**अथवेति** । अवगतिः—ज्ञानम् । **परा निष्ठेति** । अतः परं ज्ञातव्यं नावशिष्यत इति भावः । **नान्तरीयकत्वादिति** । अत्यावश्यकत्वादित्यर्थः । अगतिरिति पदच्छेदेनाचार्यपदाध्याहारेण च पक्षान्तरमाह—**अथवेति** । **तदस्म्यहमिति** । यथाचार्यस्य प्रतिपाद्यं ब्रह्माहमेवेति बुद्धिस्तथैव शिष्यस्य सा भवतीत्यर्थः । आगमानुसारमेवाचार्येणापि बोधनीयं न स्वातंत्र्येणेति बोधयितुमागमवतेति पदम् । इतरथाभेददर्शिनाचार्येण प्रोक्ते सति । अणीयानित्युपक्रमगतपदानुसारमतर्क्यमित्यस्य पुंलिङ्गत्वेन विपरिणामः कर्तव्य इति द्योतयति—**अतर्क्य इत्यनेन** । **स्वबुद्ध्याभ्यूहेनेति** । गुर्वाद्युपदेशरूपसंस्काररहिता या केवला स्वबुद्धिस्तयाभ्यूह आरोपस्तेन तर्केणेत्यर्थः। ननु आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्य इति श्रुतौ मननस्य समाम्नानात्कथं तर्कोऽपोद्यत इत्यत आह—**केवलेनेति** । श्रुतिसाहाय्यरहितेनेत्यर्थः । केनचित्—तार्किकेण । **कुतर्कस्य निष्ठेति** । कुत्सिततर्कः कुतर्क उत्प्रेक्षामात्रनिबन्धनस्तस्य निष्ठा कस्मिंश्चिदपि विषये

परिसमाप्तिर्न कदाचिदपि विद्यत इत्यर्थः । सविस्तरमुपपादितं चैतद्भगवत्पूज्यपादैः श्रीशंकराचार्यैः 'तर्काप्रतिष्ठानात्' ब्र. सू. २।१।११ इत्यस्य व्याख्यानावसरे ॥ ८ ॥

( प्रकाशिका ) **पाण्डित्यमात्रेत्यादि** । केवलं पाण्डित्यमेव तद्द्वारा सभाजयादि च प्रयोजनं यस्यैतादृशं वेदान्तश्रवणं यस्य पुरुषस्य तेन । येन केवलं सभाजयादिनिमित्तमेव वेदान्तश्रवणमनुष्ठितमित्यर्थः । **तदेकान्तिनेति** । एकान्तो निश्चयस्तन्निश्चयवतेत्यर्थः । **तर्कागोचरमिति** । केवलतर्कागम्यं श्रुतिसाहाय्येनैव स गम्यत इत्यर्थः ॥ ८ ॥

१।२।९

[शांकरभाष्यम्] **अत इति** । यतस्तर्कानधीनातः । आत्ममतिः आत्मविषयिणी बुद्धिः । [पृ.३०] आपनेयेत्याप्लधातो रूपं न संभवत्याप्धातोरनीयरि प्रत्यये आपनीयेति भवितव्यमतोऽर्थान्तरमाह—**नापनेतव्येति** । अपोपसर्गपूर्वकस्य 'णिञ् प्रापणे' इति धातो रूपम् । केवलतर्कस्यैव प्रतिषेधो नागमघटितस्येति बोधयति —**तार्किको ह्यनागमज्ञ इति** । **यत्किंचिदेवेति** । परमेश्वरस्य निमित्तत्वमेव नोपादानत्वमिति । **अन्येनेति** । तार्किकादन्येनेति संबन्धः । सुज्ञानाय—साक्षात्काराय । **आप इति** । आप्लधातोर्लङन्तस्य रूपम् । वरदानोत्तरक्षण एव लप्स्यस इत्यर्थः । **अवितथविषयेति** । अवितथ आत्मा विषयो यस्याः । बतेत्यनुकम्पायाम् । अनुकम्पयन् नचिकेतसि दयां कुर्वन् । **त्वादृगित्यादि** । हे नचिकेतो यादृक्त्वं प्रष्टा तादृशः पुनर्मत्पुत्रः शिष्यो वा प्रष्टा भवतु । ईदृक्प्रश्नो मह्यं रोचत इति भावः ॥९॥

[ प्रकाशिका ] [ पृ. ३० ] **सिषाधयिषिततयेति**—साधयितुमिष्टतयेत्यर्थः । अप्रकम्प्या—लोभनीयवस्तुभिरविचाल्या ॥ ९ ॥

१।२।१०

[ शांकरभाष्यम् ] कर्मफलस्यानित्यतां जानन्नप्यहं बहुविधं कर्म कृतवान् । त्वं तु मया दीयमानं तत्फलमपि न गृह्णास्यतो मदपेक्षयाधिकबुद्धिमानसीति स्तौतीत्याह—**पुनरपीति** । **निधिरिवेति** । कामनाविषयत्वगुणयोगाच्छेवधिशब्दः कर्मफलवाचक इत्यर्थः । ध्रुवशब्दार्थमाह—**परमात्माख्य इति** । **तेनेति** । तेन चितेनाग्निना धर्माधर्मफलप्रदानेन प्राणिनां नियामकत्वस्याधिकारो मया लब्धः । **आपेक्षिकमिति** । यद्यपि तद्यथेह कर्म-

चितो लोकः क्षीयत इत्यादिश्रुत्यास्यापि फलस्यानित्यत्वं तथापि यज्ञान्तर-दृष्ट्या सापेक्षमस्य नित्यत्वम् । यज्ञान्तरफलमल्पकालस्थायि । अस्य फलं तु तदपेक्षया किंचिदाधिककालस्थायि । नतु चिरन्तनमिति भावः ॥१०॥

१ । २ । ११

[ शांकरभाष्यम् ] हिरण्यगर्भपदपर्यन्तं विरक्तस्य ब्रह्मविद्यायाम-धिकार इति दर्शयितुं नचिकेतसं स्तौति—**त्वं त्विति** । [पृ.३१ ] क्रतोः—**हिरण्यगर्भोपासनायाः** ॥ ११ ॥

[ प्रकाशिका ] [ पृ. ३१] कामस्याप्तिमित्यादि सर्वं परमात्मनि योज्य-मिति मत्वा पक्षान्तरमाह—**यद्वेति** ॥ ११ ॥

१ । २ । १२

[ शाङ्करभाष्यम् ] य आत्मा देहव्यतिरिक्ततया त्वया पृष्टः तस्यैव ज्ञानं संसारनिवृत्तिपूर्वकं परमानन्दावाप्तिसाधनं भवति नातः परं श्रेयःसाधन-मिति पृष्टवस्तुप्रशंसाद्वारा प्रष्टारं स्तौति—**यं त्वमिति** । **अतिसूक्ष्मत्वा-दिति** । परमसूक्ष्ममाकाशं तस्यापि कारणत्वादतिसूक्ष्मत्वमस्य । **प्राकृते-त्यादि** । प्राकृतविषयाः शब्दादयस्तद्विकारविज्ञानैः । ननु महीयस आत्मनो बुद्धौ स्थितिः कथमत आह—**तत्रोपलभ्यमानत्वादिति** । अधि-गमेन—प्राप्त्या । **समाधानमिति** । विषयप्रवृत्तिनिरोधं कृत्वा सम्यक्स्थापन-मित्यर्थः । **उत्कर्षापकर्षयोरभावादिति** । हर्षः स्वोत्कर्षेण परापकर्षेण च भवति तथा शोकः स्वापकर्षेण परोत्कर्षेण च भवति । ज्ञानिनश्चोत्क-र्षापकर्षौ न संभवतोऽतस्तस्य हर्षशोकावपि न स्त इत्यर्थः ॥ १२ ॥

[ प्रकाशिका ] तिरोधायकं—आच्छादकम् । लाभालाभौ—प्राप्त्य-प्राप्ती ॥ १२ ॥

१ । २ । १३

[ शाङ्करभाष्यम् ] [ पृ. ३२ ] **आचार्यप्रसादादिति** । आचार्यवा-न्पुरुषो वेदेति श्रुत्यनुसारमाचार्यादेव विद्याग्रहणं कर्तव्यं न स्वतंत्रतयेत्यर्थः । **आत्मभावेन परिगृह्येति** । श्रुतब्रह्मणो मननेन दृढतां संपाद्येत्यर्थः । **मर्त्य इति** । प्रायेण मनुष्याधिकारत्वाच्छास्त्रस्येति मर्त्यग्रहणम् । **पृथक्-कृत्येति** । निदिध्यासनद्वारा । प्राप्य—साक्षाल्लब्ध्वा । ब्रह्मसद्मेति ब्रह्मैव सद्म न तु ब्रह्मणः सद्मेति विग्रहः ॥ १३ ॥

[ प्रकाशिका ] [पृ. ३२] देशविशेषे—**बुद्धौ** । **संप्रसाद इति** । संप्रसी-

दत्यस्मिन्निति संप्रसादः स्वापस्तदुपलक्षितो जीवः । जक्षत्—भक्षयन् । ब्रह्मजज्ञमित्यादिश्रुत्यैकवाक्यतापन्नत्वाय जीवपरत्वं व्याख्यायतामिति पूर्वपक्षमाह—नन्विति । ब्रह्मजज्ञमिति मंत्रेऽसंजातविरोधित्वेनोपक्रमानुसारमुपसंहारस्य लापनीयत्वात् देवशब्दस्य देवात्मकमित्यर्थो गृहीतः परंतु तं दुर्दर्शमिति मंत्रे जीवलिंगस्योपक्रमेऽभावाद्देवशब्दस्य देवात्मक इत्यर्थग्रहणमशक्यमिति मत्वोत्तरमाह—नेत्यादिना [ पृ. ३३ ] गव्हरेष्ठमिति पदेनेति । यथा गव्हरान्तस्थं वस्तु दुर्विज्ञेयं तथा परमात्मवस्त्वित्यर्थः । ननु तर्ह्युभयमंत्रयोरेकवाक्यता कथं स्यात्तत्राह—इयांस्तु विशेष इति । जीवशरीरकेति । जीवः शरीरं यस्येति बहुव्रीहिः ॥ १३ ॥

१ । २ । १४

[ शाङ्करभाष्यम् ] यदि देहव्यतिरिक्तात्मज्ञानमेव श्रेयःसाधनं तर्हि तदेव ब्रूहीत्याह—यद्ब्रहमिति । अत एव वरदानव्यतिरेकेणायमपूर्वः प्रश्न इति नाशंकनीयं, यतो येयं प्रेत इत्यादिना पृष्टस्यैव देहव्यतिरिक्तस्यात्मनो याथात्म्यं, ॐकारोपासनादिरूपं ज्ञानसाधनं च वक्तुं स एव प्रश्नः । शास्त्रीयादिति । चैत्यवन्दनादौ धर्म्यप्रसिद्धिस्तां वारयितुमिदम् । धर्मपदं तत्फलतत्कारकादीनामुपलक्षणमित्याह—तत्फलादित्यादि ॥ १४ ॥

[ प्रकाशिका ] श्रीभाष्यगतपूर्वापरवाक्यविरोधं परिहरत्यनुवादपूर्वकं—नन्वितिं । [ पृ. ३४ ] उपेयः—प्राप्यः । विवक्षित इति । साधकादन्यत्रेत्यर्थः । अन्यत्रशब्दवैयर्थ्यमिति । चतुर्थस्यान्यत्रशब्दस्य वैयर्थ्यमित्यर्थः । कालत्रयपरिच्छिन्नतयेति । कालत्रय एवोपायः संपादयितुं शक्यत इति भावः । तन्त्रेण—एकत्वविवक्षया । अन्तर्भावश्चेति । सोऽपि प्रश्नोऽत्रैवान्तर्भावयितुं शक्यत इत्यर्थः । [पृ ३५] अन्यत्रशब्दयुगद्वयस्येति। अन्यत्रेतिशब्दयोर्युगं युगलं तादृशयुगयोर्द्वयं द्वे युगे । एवं चान्यत्रशब्दचतुष्टयमित्यर्थः । प्रतिवचनादर्शनादिति । उपायात्मकोत्तरादर्शनात् । विशेष्यप्रश्ने पृष्टे तदुत्तरे विशेषणगतं विशेषं दृष्ट्वा न कोऽपि प्रश्नगतं उत्तरगतं वा विशेष्यं सविशेषं मनुत इति दृष्टान्तपूर्वकं प्रतिपादयति—अस्ति किमित्यादिना । चम्पकालंकृतनिष्कुटमिति । निष्कुटं—बहिर्द्वारम् । निष्कुटद्वारोपान्तप्रधानकत्वमिति । निष्कुटं—द्वारं तथा द्वारोपान्तप्रदेशास्तन्मुख्यत्वं तत्प्रश्ने न कश्चिदभ्युपैति । अविरोध एव सामानाधिकरण्यस्य मूलमिति सदृष्टान्तं प्रदर्शयति—नीलो दीर्घ इत्यादिना [ पृ. ३६ ]

**प्रसक्तानुप्रसक्त्येति** । प्रसक्तं प्रकृतोपनिषद्व्याख्यानं तदनुप्रसक्तिरेतदुपनिषद्गतमंत्रार्थघटितश्रीभाष्यपूर्वापरोक्तिविरोधपरिहारादिकम् ॥ १४ ॥

१ । २ । १५

[ शांकरभाष्यम् ] **वेदा इति** । वेदैकदेशा उपनिषद इत्यर्थः । **प्रतिपादयन्तीति** । तं त्वौपनिषदं पुरुषं पृच्छमीति श्रुत्योपनिषदः साक्षात्साधनमात्मप्राप्तौ तपआदिकर्माणि चित्तशुद्धिद्वारा । [ पृ. ३६ ] **गुरुकुलवासलक्षणमिति** । ' नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ' इत्यादियाज्ञवल्क्यस्मृत्याऽऽमरणं गुरुकुलवासो ब्रह्मविद्यांगभूत इन्द्रादिवद्वा नियमितकालपर्यन्तम् । विचारासमर्थस्य मन्दाधिकारिणो ज्ञानसाधनं संक्षेपेणाह—**संग्रहेणेति** । **ॐशब्दवाच्यमोंशब्दप्रतीकं चेति** । यच्छब्दोच्चारणेन यन्मनसि स्फुरति तत्तस्य वाच्यं प्रसिद्धं समाहितचित्तस्योंकारोच्चारणे विषयानुपरक्तं संवेदनं चेतसि स्फुरति तदोंकारमवलम्ब्य तद्वाच्यं ब्रह्मास्मीति ध्यायेत्तत्राप्यसमर्थ ॐ शब्द एव ब्रह्मदृष्टिं कुर्यादित्यर्थः ॥ १५ ॥

[ प्रकाशिका ] प्राप्यवैभवं—लप्स्यमानैश्वर्यम् । **अनुपमामिति** । दीर्घश्छान्दसः । निरुपममित्यर्थः । [ पृ. ३७ ] **उपबृंहणानुसारादिति** । श्रुत्युक्तोपबृंहकगीतावाक्यानुरोधात् । गीतावाक्यस्योपबृंहकत्वं च भारतरूपेतिहासगतत्वात् । इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्युक्तेः । **संगतार्थत्वादिति** । एकार्थत्वादित्यर्थः । परागर्थः—प्रत्यगात्मभिन्नार्थः । **भेदप्रसक्तिमाति**—द्वैतप्राप्तियुक्ते । **स्मृतिप्रत्यभिज्ञापकस्येति** । अभेदव्यापिन इत्यादिस्मृत्या स एवार्थो बोध्यत इति प्रत्यभिज्ञया ज्ञापयितुः । **अनुपपत्त्यभावादिति** । कथमपि तस्याप्युपपत्तिः कर्तुं शक्यत इति भावः । उपरितनभागाः—उपासनाकाण्डात्मका वेदभागाः । [ पृ. ३८ ] **स्त्रीसंगराहित्यादीति** । दर्शनं स्पर्शनं केलिरित्याद्यष्टविधमैथुनाभाव आदिपदेन ग्राह्यः । **शब्द इति** । संग्रह्यतेऽर्थोऽनेनेति व्युपत्त्यायमर्थो लभ्यते । एवंच शब्दद्वारा तत्पदं ब्रवीमीत्यर्थः । प्रणवं प्रशस्येति श्रीभाष्यं तट्टीका श्रुतप्रकाशिका च नानुपपन्नेति द्योतयति तद्वाक्यनिर्देशपूर्वकं—**प्राप्येत्यादिना** । **स्मृत इति** । भगवद्गीतावाक्यमेतत् ॥ १५ ॥

१ । २ । १६

[ शांकरभाष्यम् ] [ पृ.३८ ] फलवचनं व्याचष्टे—**एतद्ध्येवाक्षरमिति** । एतदुपास्यमक्षरं परमपरं वेति ज्ञात्वोपास्य योऽधिकारी यत्परमपरं वेच्छति

स तद्रूपो भवतीत्यर्थः । **परं चेदिति** । यदा परं ब्रह्मालम्बनत्वेन स्थितं तदा तज्ज्ञातव्यमेव केवलं ज्ञानविषयमेव तत् । तस्य प्राप्तेः कर्तुमशक्यत्वात् । अपरब्रह्मणः प्राप्तिः संभवतीत्यत आह—**अपरं चेत्प्राप्तव्यमिति** १६

[ प्रकाशिका ] **स्तौतीति**—फलबोधनद्वारेति शेषः । **ब्रह्मप्राप्तिसाधनत्वादिति** । आयुर्वै घृतमितिवद्ब्रह्मप्राप्तिसाधन ॐकारे ब्रह्मणो लक्षणेत्यर्थः । जप्येषु—जपनीयेषु गायत्र्यादिमन्त्रेषु । **यत्कामयत इत्यादि** । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवद्गीतास्थन्यायात् १६

१ । २ । १७

[ शांकरभाष्यम् ] ब्रह्मप्राप्त्यालंबनानां—गायत्र्यादीनाम् । परशब्देनापरस्याप्युपलक्षणमित्याह—**परमपरं चेति** । **ब्रह्मलोक इति** । ब्रह्मैव लोको ब्रह्मलोक इति विग्रहो नतु ब्रह्मणो लोकः । द्वैतापत्तेः । **ब्रह्मभूत इति** । नतु ब्रह्मीभूत इत्यभूततद्भावाच्च्विघटितप्रयोगः साधुः । तथा सति पुत्रीकृत इत्यादिवन्न ब्रह्म, अब्रह्म, अब्रह्म ब्रह्मैव संपद्यमान इत्यादिनञ्घटितो विग्रहः कर्तव्यो भवेत्तच्चाद्वैतमते न घटते । एतन्मते सर्वदैव जीवस्य ब्रह्मरूपत्वात् कदाचिदप्यब्रह्मरूपत्वेनास्थितेः ॥ १७ ॥

[ प्रकाशिका ] **ध्यानादिसर्वोत्कृष्टमिति** । ध्यानादिभ्यः सर्वेभ्य उत्कृष्टम् ॥ १७ ॥

१ । २ । १८

[ शांकरभाष्यम् ] **मन्दमध्यमप्रतिपत्तॄनिति** । मन्दमध्यमश्रेणीस्थोपासकान् । तादृशाधिकारिण इत्यर्थः । अथ—साधनोपदेशानन्तरम् । साक्षात्—उपाध्यनन्तर्भावेन । निर्दिधारयिषा—निर्धारयितुं निश्चाययितुमिच्छा । [ पृ. ३९ ] **अनेकविक्रिया इति** । यास्कोक्ता अस्ति, जायते, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति षड् भावविकाराः । **मेधावीति** । धीर्धारणावती मेधेति कोशाद्धारणाशक्तिमान् । मेधावीत्यनेन गुणगुणिभावः स्यादित्यत आह—**अविपरिलुप्तेति** । व्यतिरेकमुखेन शाश्वतत्वं व्युत्पादयति—**यो हीति** । ननु शरीरविनाशे तत्संश्लिष्ट आत्मापि विनश्येदत आह—**तत्स्थोऽपीति** । यथा शस्त्रादिभिर्हतोऽपि महाकाशो निःसंगस्वभावत्वान्न हन्यते तद्वच्छरीरे शस्त्रादिभिर्हतेऽपि तत्स्थ आत्मा संश्लिष्टत्वाभावात् न विनश्यतीत्यर्थः ॥ १८ ॥

[ प्रकाशिका ] मन्त्रद्वयमपृथग्व्याख्यायते तद्बीजं प्रदर्शयितुमाह—**प्रथम**-

**मित्यादि** । [ पृ. ३९ ] एवमपृथग्व्याख्याने व्याससंमतिमाह—**इदं चे-त्यादिना** । **विवरणरूपत्वादिति** । व्याख्यातृव्याख्येयभावरूपसंबन्धेनै-क्यमुभयमंत्रयोरित्यर्थः । अतः—जीवगतवध्यघातुकभावस्वीकारात् । **वादनि-षेधाविति** । वध्यत्वकथनं तन्निषेधश्च । **विपश्चित्त्वार्ह इति** । ज्ञानप्राप्त्य-नन्तरं ज्ञानित्वस्य लाभादिदानीं तद्योग्यतावान् । **उत्पादकशून्य इति** । अस्य कोऽप्युत्पादको नास्ति । [ पृ. ४० ] **शरीरान्तर्वर्तिन इत्यादि** । शरीरांतर्वर्ती शरीरविनाशमन्ववश्यं विनश्येदित्यर्थः । **हननादिप्रसक्ती-त्यादि** । हननादिप्रसक्तिः—हननादिप्राप्तिः । तादृशप्रसक्तिपूर्वको निषेधः । अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् निषेधं प्रति निषेध्यस्यावश्य-कतास्ति । अत उक्तं—**हननादिप्रसक्तिपूर्वकनिषेधाविति** । **वियत्पाद इति** । बृहदारण्यकोपनिषदि । उत्पत्तिश्रुतिसर्वविज्ञानप्रतिज्ञाश्रुत्योर्विरोधमा-शंक्य समाधत्ते—**नचेत्यादिना** । **उत्पत्तिश्रुतेरिति** । स्वरूपस्य नित्यत्वेऽप्य-वस्थान्तरापत्तिरूपोत्पत्तिर्भवतीत्येवंरूपेणोत्पत्तिश्रुतिः संगच्छते । ज्ञानसंकोच-विकाशेत्यादिरीत्या जीवस्योत्पत्तिः प्रदर्श्यते।तदग्रे विव्रियते ग्रन्थकृता स्वयमेव-**इयांस्तु विशेष इत्यादिना** । तेन न तयोर्विरोधः । अधुनोत्पत्तिनिषेधकश्रु-तेर्न जायते म्रियते वेत्याद्याया अविरोधं दर्शयति—**उत्पत्तिनिषेधश्रुते-श्चेति** । ' न जायते ' इत्यादिना योत्पत्तिर्निषिध्यते तस्या **अयमर्थो यदव-स्थान्तरप्राप्तिर्नामोत्पत्तिर्जीवस्य संभवति** । **स्वरूपान्यथाभावलक्षणोत्पत्तिस्तु न** संभवतीत्यर्थः । **विकारोऽस्त्येवेति** । तादृशविकारे स्वीकृतेऽपि न नित्यत्व-हानिरित्यर्थः । सा—स्वरूपान्यथाभावलक्षणा । एवं जडानां स्वरूपा-न्यथाभावरूपोत्पत्तिरस्ति । जीवानां तु न स्वरूपान्यथाभावरूपो-त्पत्तिः किन्तु स्वभावान्यथाभावरूपोत्पत्तिः । ईश्वरस्य तु निया-मकत्वाद्यवस्थासत्वेऽपि पूर्वोक्तोभयविकाराभावः । [ पृ. ४१ ] पंचरा-त्रस्य श्रुत्या सह विरोधं शंकते—**नन्विति** । क्यन्तो घुरिति । ' दाधा घ्वदाप् " पा. सू. १ । १ । २० इति पाणिनिसूत्रेण दारूपा धारूपाश्च धा-तवो घुसंज्ञाः स्युरित्यर्थः । न दाधातोर्घुसंज्ञा क्रियते । तस्मादाङ्पूर्वकाद्दाधातोः ' उपसर्गे घोः किः ' पा. सू. ३ । ३ । ९२ इति किप्रत्यये कृते तदन्तस्य पुंल्लिंगत्वमावश्यकं ततश्च कथं विज्ञानं च तदादि चेत्युक्तमिति शंकावा-क्यार्थः । समाधत्ते—**नायं घुरिति** । नायं दाधातोराङ्पूर्वस्य प्रयोगः किन्तु णिव-प्रत्ययान्तस्याद्धातोरितिसमाधानार्थः ।अवश्यमत्तोत्यादीत्यर्थस्तदाह—**निरिव**-

**लजगत्संहर्तृमुखेनेति** । स्वेच्छाधीनशरीरपरिग्रह इति। नतु पुण्यपापकर्माधीन-शरीरपरिग्रह इति भावः। **किं न स्यादिति**।प्रवाहपतितन्यायादित्यर्थः। द्विपदां-नराणाम्।आरण्यकं-उपनिषद्भागः। [पृ. ४२]कृतान्तः—सिद्धान्तः।कृतलक्षणैः—सुलक्षणैः । **प्रतिष्ठापितवतेति** । इदं बादरायणेनेत्यस्य विशेषणम् । यथा-गमं—यथाशास्त्रं, यथान्यायं—युक्तिपूर्वकम् । **हेतुभिरिति** । कल्पितहेतुघटि-तानुमानादि प्रदर्श्य कपिलादिशास्त्रखंडनं न कर्तव्यमित्यर्थः । एतच्छास्त्रं—पांचरात्रम् । तत्पादे—शारीरमीमांसाया द्वितीयाध्यायद्वितीयपादे तर्काख्ये । **न निराक्रियत इति** । तुल्यन्यायादिति भावः । विप्रलिप्सा—विप्रलब्धु-मिच्छा वञ्चनम् । **समानमिति** । सर्वेषां कपिलादिमतानां परमरहस्यं य-न्नारायण एव परमात्मेति तत्सर्वत्र समानं पांचरात्रेणातो बादरायणसंमतमेव तन्न तत्खण्डनार्थं बादरायणस्य प्रयासः किन्तु येऽप्रज्ञाः कपिलादिशास्त्रं शैवाद्यागमं च पठन्ति तेषां तत्तदागमप्रणेतृरहस्यानभिज्ञत्वादापातप्रतिपन्ने सहसैव बुद्धिमारूढे शिवादितत्त्वे श्रद्धा जायते तत्तेषामापातगृहीतार्थानुया-यित्वं निराकर्तुं बादरायणस्य प्रयास इति भावः । [ पृ. ४३ ] एवं च कपिलाद्यागमैकदेशार्थ आपातप्रतिपन्नोऽसंगतः । पांचरात्रस्य तु स तथा प्र-तिपन्नोऽपि प्रामाणिक एवेत्याह—**पंचरात्रशास्त्रं त्वित्यादिना । वेदवि-रुद्धेति** । परमेश्वर एव निमित्तमुपादानं चोभयविधं कारणं नैयायिकोक्तो निमित्तोपादानकारणभेदस्तु वेदविरुद्धः ॥ १८ ॥ १९ ॥

१ । २ । १९

[ शांकरभाष्यम् ] **शरीरमात्रात्मदृष्टिरिति** । शरीरमेवात्मेति दृष्टि-र्यस्य नतु सत्यात्मदृष्टिरित्यर्थः । [ पृ. ४० ] **श्रुतिप्रामाण्यादिति** । इति नु कामयमान इति श्रुतिरनात्मज्ञस्य संसारं बोधयति । तथा ' अथा-कामयमान " इति श्रुतिरात्मज्ञस्य तदभावं च बोधयति । **न्यायादिति** । यदज्ञानाद्या प्रवृत्तिः सा तज्ज्ञानान्न भवतीति लौकिकन्यायात् । तदुक्तं विवेकी सर्वदा मुक्तः कुर्वतो नास्ति कर्तृता । अलेपवादमाश्रित्य श्रीकृष्ण-जनकौ यथा ॥ १९ ॥

१ । २ । २०

[ शांकरभाष्यम् ] [ पृ. ४३ ] कामवर्जितत्वादिसाधनविधानार्थ-मुत्तरवाक्यमवतारयति—**कथमिति** । एकस्यैव वस्तुनः परस्परविरुद्धे अणी-यस्त्वमहत्त्वे कथमिति तन्द्युत्पादयति—अणुत्वाद्यध्यासाधिष्ठानत्वादणुत्वादि-

व्यवहारो न वस्तुत इत्यर्थः । **अणु महद्वा यदस्तीत्यादिना** । तस्मात्— निखिलस्य वस्तुजातस्यात्मनैव सत्त्वसंभवात् । **नामरूपवस्तूपाधिकत्वादिति** । अत्र वस्तुशब्देन कर्मोच्यते । **ब्रह्मादिस्तम्बपर्यन्तस्येति** । **ब्रह्मा** हिरण्यगर्भः । स्तम्बः तृणजातिविशेषः । यद्भक्षणेन गजा मोदन्ते । अत एव तेषां स्तम्बेरमा इति संज्ञा । **दर्शनश्रवणेत्यादि** । आत्मदर्शनोद्देशेन 'आत्मा वारे द्रष्टव्यः श्रोतव्यः' इत्यादिश्रुत्या विहितं यच्छ्रवणं मननं विज्ञानं निदिध्यासनं तदात्मकं लिङ्गं साधनं यस्यास्ति । श्रवणादिसाधनसहित इत्यर्थः । इहामुत्रार्थफलभोगविरागरूपां साधनसंपत्तिं दर्शयति—**दृष्टादृष्टेत्यादिना** । दृष्टा ऐहिकाः । अदृष्टाः पारलौकिकाः । **यदा चैवमिति** । अकामत्वे सतीत्यर्थः । धातुशब्दस्य रूढार्थं परित्यज्य यौगिकार्थं ग्राहयति—**शरीरस्य धारणादिति** । **कर्मनिमित्तेति** । कर्मनिमित्तौ वृद्धिक्षयौ शरीरस्य नात्मनः ॥ २० ॥

[ प्रकाशिका ] प्रत्यगात्मस्वरूपम्—जीवस्वरूपम् । **स्वाव्याप्तवस्तुरहित इति** । स्वेनाव्याप्तं यद्वस्तु तद्रहितः । सर्ववस्तुव्यापक इत्यर्थः । **काकाक्षिन्यायेनेति** । काकस्याक्षिगोलक एक एव । तत्तत्पार्श्वगतवस्तुदर्शनसमये तत्तदक्षिस्थानसंनिहितो भवति । तद्वदेक एवात्मशब्द उभयत्र संबध्यते । एकस्यान्वितस्य शब्दस्योभयत्रसंबन्धे दृष्टान्तमाह—**मूलत इति** । जैमिनीये चतुर्थाध्याये द्वितीयपादे तृतीयाधिकरणे छेदनस्य शाखाप्रयुक्ततासंज्ञके शाबरभाष्ये ' शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यं तत् ' ८ ' श्रुत्यपायाच्च ९ इति ' सूत्रद्वयव्याख्यान एतद्विषयवाक्यमुक्तं—दर्शपूर्णमासयोः सामाम्नायते ' मूलतः शाखां परिवास्योपवेषं करोति ' इति । तत्र संशयपूर्वपक्षादिप्रदर्शनसमयेऽस्य वाक्यस्यैवमर्थः कृतः, ' वत्सापाकरणार्थं मूलतः शाखा छेदनीया ततः कपालोपधानार्थं छिन्नायाः शाखाया मूल एवोपवेषः कर्तव्योऽर्थाच्छिन्नस्य तस्य भागस्य पुनः प्रादेशपरिमितं मूलभागं छित्वोपवेषः कर्तव्यः । एवं च द्विवारं छेदनं, एतावतेदं सिद्धं यन्मूलत इति पदं पूर्वं परिवासनेन साकं संबध्यते ततस्तदेव परिवासनसंबद्धं पुनर्मूलभाग उपवेषः कर्तव्य इति द्योतनार्थमुपवेषेण संबध्यते । विषयवाक्ये परिवास्येत्यस्य छित्वेत्यर्थः । उपवेषो नाम वत्सापकरणार्थं छिन्नायाः शाखायाः प्रादेशपरिमितः काष्ठभागः । परिवासनान्वितस्य—छेदनान्वितस्य । यथा दृष्टान्ते परिवासनान्वितस्य मूलत इति पदस्योपवेषं

करोतीत्यनेनान्वयस्तथा दार्ष्टान्तिकेऽप्यात्मशब्देनान्वितस्यास्य जन्तोरित्यस्य गुहायामित्यनेनाप्यन्वयः। **उभयत्रान्वये** इति। अस्य जन्तोरित्यस्यात्मेत्यनेन गुहायामित्यनेन चान्वये। [ पृ. ४४ ] **अनुपपन्नतयेति।** न जायत इति जन्तुरिति च विरोधादनुपपत्तिः। **प्रत्यक्षादिसंनिधापितेति।** इदमस्तु संनिकृष्टे समीपतरवार्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयादित्युक्तेरस्येत्यस्य प्रत्यक्षादिसंनिधापितदेहपरत्वम्। उत्तरपक्षं शङ्कते—**न चेति**। उत्तरसन्दर्भप्रतिपाद्यं—**उत्तरग्रन्थप्रतिपाद्यम्। चेतनपर्यायतयेति**। प्राणी तु चेतन इत्यादिपूर्वोक्तकोशवाक्यप्रामाण्याज्जन्तुशब्दश्चेतनवाची। **परीत्येति**। अद्वैतवादिमतवादित्यर्थः। अक्रतुरित्यत्र क्रतुपदेन संकल्पवाचिना संकल्पयुक्तमर्थात्कामनायुक्तं कर्म लक्ष्यते तदाह—**काम्यकर्मादिरहित** इति। अस्मिन्नर्थे श्रीभाष्यकृतां रामानुजाचार्याणां संमतिमाह—**द्युभ्वाद्यधिकरण** इति। [पृ.४९ ] द्वितीयान्तपाठे ‘ अक्रतुं ’ इतीशमित्यस्य विशेषणं तदनुकूलमर्थमाह—**कर्मकृतोत्कर्षापकर्षरहितामिति**। जीववदीश्वरे कर्मकृतोत्कर्षापकर्षौ नेत्यर्थः २०

१।२।२१

[ शांकरभाष्यम् ] [ पृ. ४९ ] कामराहित्यस्यान्वयव्यतिरेकाभ्यां हेतुत्वं साधयति—**अन्यथेत्यादि**। अन्यथा—कामनाराहित्याभावे। दुर्विज्ञेयत्वे विरुद्धधर्मवत्त्वमेव हेतुरित्याह—**यस्मादिति**। **अचल इति**। जाग्रत्स्वप्नसाक्षित्वेन कूटस्थः। **दूरं व्रजतीति**। मन आदीन्द्रियेषु विषयदेशं गच्छत्स्वयमपि प्रतिबिम्बरूपेण दूरं गच्छतीत्यर्थः। **शयान इति**। उपरतेष्विन्द्रियेषु विशेषविज्ञानाभाव एव शयनम्। विज्ञप्तिसामान्यरूपेण स्थितिरेव सर्वतो गमनं च। **विश्वरूप इवेति**। विश्वरूपो मणिर्यथा द्रष्टृभेदान्नानारूपोऽवभासते तद्वदात्मा। **चिन्तामणिवदिति**। चिन्तामणिश्चिन्तितानुसारं नानाविधो भासते न स्वरूपतस्तथात्माप्युपाधिवशात्स्थितिगतिवत्परस्परविरूद्धधर्मतया भासते न स्वरूपत इत्यर्थः। अतः—**उपाध्यविवेकात्**। इहैव—देह एव ॥ २१ ॥

[ प्रकाशिका ] इतरत्र लौकिकपदार्थेषु। **मदामदमिति**। **मदो हर्षः**। **अमदोऽमर्षः**। तादृशविरुद्धधर्मयुक्तं, अर्श आद्यच्। अध्यासद्वारा तद्युक्तत्वमित्याह—**हर्षामर्षरूपविरुद्धधर्माध्यस्तामिति** ॥ २१ ॥

१ । २ । २२

[ शांकरभाष्यम् ] विज्ञानफलमाह—**नहीति । शोकोपपत्तिरिति ।** द्वैताभावादित्यर्थः ॥ २२ ॥

१ । २ । २३

[ शांकरभाष्यम् ] [ पृ. ४६ ] नायमात्मेति मूलमंत्र उत्तरार्धप्रथमवाक्यस्यार्थद्वयम् । १ एष साधको यमेव स्वात्मानं श्रवणमननादिभिर्वृणुते—श्रवणादिकालेऽपि सोऽहमित्यभेदेनैवानुसंधत्ते तेनैवात्मना लक्षणया तदनुग्रहेण पूर्वोक्तानुसंधानवता यथानुसंधानं स्वयं प्रत्यगात्मतयात्मा लभ्यते । २अथवा एष प्रकरणप्रतिपाद्य आत्मान्तर्यामिरूपेणाचार्यरूपेण वा व्यवस्थितो यमेव साधकं वृणुतेऽनुगृण्हाति तेन परमेश्वरानुग्रहलब्धप्रत्यग्ब्रह्मैक्यानुसंधानवता मुमुक्षुणा लभ्यः । **केवलेनेति** । गुरूपदेशरहितेनेत्यर्थः । अधिकारिणा परमं तत्त्वमीश्वरानुग्रहाल्लभ्यत इति पिण्डितोऽर्थः।२३।

[ प्रकाशिका ] [ पृ. ४६ ] **लक्ष्यत इति** । आयुर्वै घृतमितिवत्साधने लक्षणां कृत्वेत्यर्थः । प्रवचनमध्यापनं तदर्थं पूर्वं प्रवचनकारिभिर्मननं क्रियत इति तत्साधनं मननम् । समभिव्याहारः—समीपोच्चारणम् । **हेतुत्वाप्रसक्तेश्चेति** । श्रवणादिवदध्यापनस्य ब्रह्मज्ञानसाधनत्वेन कुत्राप्यनुक्तत्वात् ॥ २३ ॥

१ । २ । २४

[ शांकरभाष्यम् ] दुश्चरितं—कायिकं पापम् । इन्द्रियलौल्यं—विषयप्रवणता । विषयेभ्य इन्द्रियाणां प्रत्याहारे पुण्यलोकादि फलं श्रूयते ततोऽपि समाहितचेतस्त्वमपेक्ष्यते तदाह—**समाहितचित्त इति** ॥ २४ ॥

[ प्रकाशिका ] नाविरतो दुश्चरितादित्यादिना दुश्चरितविरामादिकमुपासनाया अङ्गं विधीयते । अङ्गानुष्ठानेन विनांगिन्या उपासनाया न सिद्धिः । अङ्गापूर्वजननपूर्वकमेवाङ्गिनोऽपूर्वमुत्पद्यत इति प्रसिद्धम् । ननु दुश्चरिताविरत्यादयः पुरुषार्था एव नोपासनार्थतया तदङ्गभूता इति चेन्न । यतः पूर्वतन्त्रे तृतीयाध्यायचतुर्थपादगते अकर्म १।४।१२ इत्यादिद्वादशे सूत्रे शाबरभाष्ये दर्शपूर्णमासयोराम्नायते 'नानृतं वदेत्' इति विषयवाक्यमादृत्य पूर्वपक्षादिविचारं कृत्वैवं निर्णीतं यदनृतभाषणनिषेधो यद्यपि पुरुषार्थस्तथापि दर्शपूर्णमासक्रत्वङ्गः । एवं च पुरुषार्थनिषेधमुल्लङ्घ्य यदि कश्चिदनृतं भाषेत तर्हि तस्य दर्शपूर्णमासक्रतुर्विकलो भवेत्तद्वदेव पुरुषार्थमपि

दुश्चरिताचरणनिषेधमुल्लंघ्य यदि कश्चिन्ममोपासना सर्वाङ्गभूता भवत्वित्याशंसेत्तर्हि तदसंगतं स्याद्यतस्तस्य सोपासना निरङ्गैव भवेद्दुश्चरितविरत्यभावात् । पुरुषार्थक्रत्वर्थयोरयं भेदः । पुरुषार्थनियमोल्लङ्घने पुरुषस्य प्रत्यवायः क्रतोर्न वैगुण्यम् । क्रत्वर्थस्याननुष्ठाने क्रतुवैगुण्यं पुरुषस्य तु न प्रत्यवाय इति । तदेतदाह—**पुरुषार्थस्यैवेत्यादि** । [ पृ. ४७ ] **उपासनासाद्गुण्यमिति** । सन्तश्च ते गुणाश्चांगानि । ते सन्ति यस्यां सा सद्गुणोपासना । अर्श आद्यच् । ततो भावे ष्यञ् । साद्गुण्यं सद्गुणविशिष्टत्वम् । एवं चोपासनायाः सर्वाङ्गविशिष्टत्वमित्यर्थः ॥ २४ ॥

१ । २ । २५

: [ शांकरभाष्यम् ] [पृ. ४७] **अपर्याप्त इति** । यस्य मृत्युरन्नत्वेऽप्यपर्याप्तोऽन्नं भवितुमसमर्थः सन्केवलशाकादिरूपः ॥ २५ ॥

[ प्रकाशिका ] ब्रह्म क्षत्रमिति सर्वस्य जगत उपलक्षणमित्याह—**ब्रह्मक्षत्राख्येत्यादि** । **स्वयमद्यमानत्वे सतीति** । शाकाद्युपसेचनं स्वयमद्यमानमप्यन्यस्याद्यमानत्वे सहायं भवति तद्वन्मृत्युः स्वयमद्यमानोऽपि परमेश्वरकृतास्थिरचरादिभक्षणसहायो भवति । ब्रह्मक्षत्रपदयोश्चराचरोपलक्षकत्वं व्युत्पादयति—**नन्विति** । ओदनस्य मुख्योऽर्थो भक्ष्यमिति । तादृशभक्ष्यस्य भक्षयिता न कोऽपि प्रसिद्धः । अतः सर्वचराचरग्रहणमवश्यं कार्यम् । तथाविधभक्षकत्वस्य परमेश्वरे प्रसिद्धत्वात् । अन्तरादित्यविद्यायां—बृहदारण्यकोक्तान्तर्याम्युपासनायाम् । **उपासनाप्रकरणत्वासंभवादिति** । अत्र मंत्रे यस्मिन् प्रकारे सर्वसंहर्ता स्थितस्तं प्रकारमित्थमिति को वेदेति प्रकारवेदनासंभवस्य कथितत्वान्नेदमुपासनाप्रकरणम् । अत्रेदं ध्येयम् । पूर्वमन्त्र उपासनासाद्गुण्यमित्यादिब्रुवतैतद्भाष्यकृतास्य प्रकरणस्योपासनात्मकत्वमंगीकृतमत्र तु तादृशोपासनाप्रकरणत्वं न स्वीक्रियते तदेतद्विरुद्धमिवाभाति । अथौदनशब्देन ब्रह्मक्षत्रगतो विशेषगुण एव कश्चिल्लक्ष्यतां किमिति सामान्येन विनाश्यत्वगुण इत्याशंक्यते—**नन्वेवमपीति** । अग्निर्माणवक इत्यत्राग्निशब्देन तद्गतपैङ्गल्यमेव माणवके लक्ष्यते नाग्निगतसामान्यधर्मो द्रव्यत्वमित्याह—**नहीति** । [ पृ. ४८ ] **पूर्वतन्त्रे वर्णितेति** । जैमिनीये तृतीयाध्यायपंचमपादे षष्ठसप्तमाधिकरणयोः सोमभक्षणार्थमध्वर्युप्रैषैश्चमसनयनमुद्दिश्यास्ति । तस्य चायं प्रैषमंत्रः । प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयजमानस्येति । अस्यार्थः । भोश्चमसाध्वर्यवः । होतुर्ब्रह्मण उद्गातॄणां यज-

**मानस्य** च चमसः **प्रैतु** गच्छतु । यत्र ते होत्रादयो भक्षयितारः स्थितास्तत्र **चमसं** सोमभक्षणपात्रविशेषं नयतेत्यर्थः । अत्रोद्गातॄणामित्यनेन बहुवचनानुरोधात्सामान्यतः सर्वर्त्विजः प्रति चमसनयनं प्राप्तं परंतु विशेषविवक्षयोद्गातॄन्प्रत्येव नीयते चमसस्तद्वदत्रापि । **षोडशर्त्विक्साधारणाकारमिति** । अत्रेदं ध्येयम् । सामान्यतः षोडशानामृत्विजां प्राप्तमिति यदत्र बोध्यते तन्न घटते । प्रैतु होतुरित्यादिमंत्रे होतृब्रह्मादीनां वचनादेव प्राप्तेः षोडशेति कथनस्यासांगत्यापत्तेः । समाधत्ते—**यद्यपीति । गौण्या लक्षणयेति** । गुणादागता गौणी । मृत्योर्यो विनाशकत्वरूपो गुणस्तन्निमित्तेत्यर्थः । जघन्यं—**गौणम् । अबाधकत्वाभिप्रायेणेति** । उपसेचनं, ओदनस्य न बाधकं किंतु संस्कारकमित्यर्थः । **रूपितस्येति** । रूपकालङ्कारबोधितस्येत्यर्थः । **दध्यन्नवदिति** । दधिमिश्रितमंन्न दध्यन्नमत्र यथा दध्न उपसेचनस्य गौणत्वेन भानमन्नस्यैव मुख्यतया यद्वदिति भावः । **अन्यादनहेतुत्वेत्यादि** । उपसेचनं दध्यादि हि स्वयमद्यमानं सदन्यस्यौदनादेर्भक्षणे विलक्षणरुच्युत्पत्तिद्वारा साधकं भवति । केवलौदनापेक्षया दधिमिश्रितौदने रुचिविशेषो लोकप्रसिद्धः । चरमश्रुतं—अन्ते पठितम् । **बुद्धिलाघवेनेति** । कल्पनालाघवादिति भावः । एवंच ब्रह्मक्षत्रमिति पदाभ्यां विशेषार्थं व्यावृत्य सामान्यतश्चराचररूपोऽर्थो यश्च स्वीकृतः स एव न्याय्य इति तात्पर्यम् २९

अथ काठकोपनिषदि प्रथमाध्याये तृतीया वल्ली ।

१ । ३ । १

[ शांकरभाष्यम् ] [ पृ. ४८ ] **नानाविरुद्धफले इति** । नाना पृथग्भूतानि तथा विरुद्धफलानि ययोस्ते । प्रतिपत्तिसौकर्यं—ज्ञानसौकर्यम् । द्वावृतपानस्य कर्तारौ किमर्थं निरूप्येते तदाह—**एवं चेति** । प्राप्ता जीवः प्राप्यं ब्रह्म तथैव गन्तृगन्तव्ये । रूपके रथी प्राप्ता प्राप्यं पदम् । **पातृसम्बन्धादिति** । पाता जीवस्तत्सम्बन्धात् । **छत्रिन्यायेनेति** । यथा मार्गगामिषु पुरुषेषु केषुचिदेव छत्रिषु छत्रिणो गच्छन्तीति प्रयोगो भवति तद्वदत्रापि कर्मफलपाय्यपायिसमुदाये पिबन्ताविति प्रयोगः । बाह्यपुरुषाकाशसंस्थानं—देहाश्रय आकाशप्रदेशः । अकर्मिणः—ज्ञानिनः । **पञ्चाग्नय इति** । गार्हपत्यो दक्षिणाग्निराहवनीयः सभ्य आवसथ्यश्चेत्येते पञ्चाग्नयो येषां ते । द्युपर्जन्यपृथिवीपुरुषयोषित्स्वाग्निदृष्टिं ये कुर्वन्ति तेऽग्निहोत्रादिकारिणो वा पञ्चाग्नय इत्यर्थः ॥ १ ॥

[प्रकाशिका] पूर्वापरसंगतिं वल्ल्योराह—**क इत्था वेदेत्यादिना**।[पृ.४९] **संख्याया उत्तरावधिरिति**। एकं दश शतं सहस्रमिति संख्याया दशकृत्वो गणनेऽन्तिमं स्थानं परार्धमिति। ततः परं लौकिकगणनायां संख्याया उपयोगो न क्रियते तेन तदवधिरवसानमित्यर्थः। अयं मन्त्रो जीवपरमात्मपरो गृह्यते तन्न समीचीनं परमात्मनि कर्मफलभोक्तृत्वासंभवस्तथा गुहावच्छिन्नत्वस्य सर्वव्यापके ब्रह्मण्यसंभव इत्यादिकारणकलापाद्नेन मन्त्रेण बुद्धिजीवावेव ग्राह्यौ ततश्च कर्मफलोपभोगसाधनभूतायां बुद्धौ करणे कर्तृत्वलक्षणया पिबन्ताविति निर्देशः कथमप्युपपद्येतेत्याह—**नन्विति**। [ पृ. ५० ] समाधत्ते—**एवमिति**। प्रतिपन्नजातिमुपजीव्य—अङ्गीकृतजात्यनुरोधात्। अङ्गीकृतजातीयव्यक्तिस्वीकारे केवलव्यक्तिज्ञानमेवापेक्ष्यते भिन्नजातीयव्यक्तिग्रहणे तु जातिव्यक्तीत्युभयज्ञानमपेक्ष्यते। एवं च प्रतिपन्नजातीयस्य ग्रहणे ज्ञानलाघवं भवति। तथा **दर्शनादिति**। अस्य गोर्द्वितीयेनार्थ इत्युक्ते गौरेवानीयते नाश्वो न गर्दभो लोके। एवं च पूर्वप्रतिपन्नगोत्वजातिविशिष्टव्यक्तेरेव ग्रहणं भवति लोके तद्वदत्रापीत्याह—**तथा चेति**। जीवपरमात्मनोश्चेतनत्वेन सजातीयत्वम्। बुद्धेस्त्वचेतनत्वाद्विजातीयत्वम्। **सर्वथाप्यसंभवादिति**। तेन च लक्षणास्वीकारेऽपि न निर्वाहः। छायातपशब्दाभ्यां न तमःप्रकाशयोर्बोधनं किन्तु किंचिज्ज्ञत्वसर्वज्ञत्वयोरतोऽयं जीवपरमात्मपरो मंत्र इत्याह—**छायातपशब्दाभ्यामिति**। संनह्यते—प्रयत्यते। **किंचेति**। उपष्टम्भकं पार्थिवद्रव्यं तद्गतगुरुत्ववति तैजसे सुवर्णे गुरु सुवर्णमिति यद्यपि व्यवहारस्तथाप्युपष्टम्भकपार्थिवद्रव्यं सुवर्णं चेत्युभे गुरुणी इति व्यवहारो न तद्वद्बुद्ध्युपाधिकत्वेऽपि जीवप्रवेशस्य बुद्धिजीवौ गुहां प्रविष्टाविति व्यवहारो न भवतीत्यर्थः। प्रसङ्गाददद्वैतिपक्षं खण्डयति—**अत एवेति** [ पृ. ५१ ] **युज्यत इति**। अविद्यान्तःकरणयोः प्रतिबिम्बोपाधित्वं न संगच्छते। यतः प्रतिबिम्बं कुत्र संभवति तदाह—**स्वच्छद्रव्येत्यादि**। लोके देवदत्तस्य प्रतिबिम्बः कदोपलभ्यते। यदा दर्पणादिस्वच्छद्रव्यप्रतिघातात्परावृत्ता देवदत्तस्य चाक्षुषकिरणास्तमेव पुनरुपलभन्ते तदा।एवं चाक्षुषद्रव्य एव प्रतिबिम्बसंभवः। चैतन्यं तु न चाक्षुषमतो न तत्र प्रतिबिम्बसंभवः। एवं च प्रतिबिम्बवादासंभवादवच्छिन्नवाद एवावशिष्टः। सोऽप्यनवच्छिन्ने परमात्मनि न संगच्छत इत्यर्थः। आञ्जस्यं—सारल्यम्। अवच्छिन्नप्रतिबिम्बाभासवादानां स्वरू-

पप्रतिपत्त्यर्थं किंचिद्विव्रियते। तथाचाद्वैतामोदे । जीवेश्वरस्वरूपविषये चावच्छेदवाद आभासवादः प्रतिबिम्बवादश्चेति पक्षाः संभवन्ति । तद्यथा—वाचस्पतेरवच्छिन्न आभासो वार्तिकस्य च । संक्षेपशारीरकृतः प्रतिबिम्बं तथेष्यते । इति । अवच्छेदोऽन्तःप्रवेशः । तद्युक्तोऽवच्छिन्नः । यथा जलेऽन्तःप्रविष्टमाकाशं जलावच्छिन्नमित्युच्यते । अन्यसबन्धेनान्यत्र भासमानोऽर्थ आभासः । यथा जपाकुसुमसांनिध्यात्स्फटिके भासमानो रक्तिमा । अयमेवोपहित इत्युच्यते । प्रतिबिम्बं प्रसिद्धम् । अवच्छेदवादिनां वाचस्पतिमिश्राणां मतेऽज्ञानविषयीकृतं चैतन्यमीश्वरः । अज्ञानाश्रयीभूतं चैतन्यं जीवः। आभासवादिनां वार्तिककाराणां मतेऽज्ञानोपहितमज्ञानतादात्म्यापन्नं चैतन्यमीश्वरः । अविद्याकार्यभूतबुद्ध्युपहितं बुद्धितादात्म्यापन्नं चैतन्यं जीवः । केचित्त्वाभासवादमेव स्वीकृत्याज्ञानसमष्ट्युपहितं चैतन्यमीश्वरः । अज्ञानव्यष्ट्युपहितं चैतन्यं जीवः । अज्ञानं च स्वरूपत एव नानाभूतमित्याहुः । प्रतिबिम्बवादिनां संक्षेपशारीरककाराणां मतेऽज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः। बुद्धिप्रतिबिम्बितं चैतन्यं जीवः । विवरणकारास्त्वीश्वरविषये आभासवादं जीवविषये च प्रतिबिम्बवादं मन्वाना अज्ञानोपहितं बिम्पचैतन्यमीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इत्याहुः ॥१॥

१ । ३ । २

[शाङ्करभाष्यम्] [पृ.९१] **परापरे ब्रह्मणी इति**। यथासंख्येन नान्वयः । कर्मविदाश्रयोऽपरं ब्रह्म । ब्रह्मविदाश्रयः परं ब्रह्मेति । **एतयोरेव हीति** । कर्मविदाश्रयस्यापरब्रह्मणो ब्रह्मविदाश्रयस्य परब्रह्मणश्चेत्युभयोर्ऋतं पिबन्तावित्यत्रोपन्यासो यस्मात्कृतस्तस्मान्नान्यत्वाशङ्केत्यर्थः ॥ २ ॥

[ प्रकाशिका ] **कानजन्तः शब्द इति** । 'लिटः कानज्वा' पा. सू. ३ । २ । १०६ इति सूत्रविहितकानच्प्रत्ययान्तः। **व्यत्ययेन शबिति**। वयं शक्नुयामेत्यर्थः । अत्र शक्धातोः स्वादिगणान्तर्गतत्वाच्छब् व्यत्ययेन। तथात्मनेपदमपि व्यत्ययेन ॥ २ ॥

१ । ३ । ३

[ शाङ्करभाष्यम् ] तत्र—जीवात्मपरमात्मनोः । उपाधिकृतः उपाधिपरिच्छिन्नः । **रथस्वामिनमिति** । रथतादात्म्याभिमानिनमित्यर्थः । अन्तःकरणैक्येऽपि वृत्तिभेदकल्पनया बुद्धिमनसोः सारथिप्रग्रहत्वकल्पनेत्याह-

**बुद्धिं त्विति** । अध्यवसायलक्षणां निश्चयस्वरूपाम् । [ पृ. ९२ ] **रशनया** अश्वाकर्षकरज्ज्वा ॥ ३ ॥

१ । ३ । ४

[ शाङ्करभाष्यम् ] **गोचरानिति** । गाव इन्द्रियाणि चरन्ति यत्रेति ते गोचरा विषयाः । औपाधिककर्तृत्वेऽन्वयव्यतिरेकौ शास्त्रं च प्रमाणमित्याह– **न हि केवलस्येति** । केवलस्य–उपाध्यपरिच्छिन्नस्य । **एवं च सतीति** । औपाधिककर्तृत्वे सतीत्यर्थः । **नान्यथेति** । यदि संसारित्वं स्वभाव एव स्यात्तर्हि स्वाभाविकस्य तस्यानतिक्रमणीयत्वेन त्यागाभावादसंसारिवैष्णवपदप्राप्तिर्नेत्यर्थः ॥ ४ ॥

१ । ३ । ५

[ शाङ्करभाष्यम् ] **अविज्ञानवानिति** । अत्राविज्ञानपदेन न ज्ञानसामान्याभावो गृह्यते किन्तु बुद्धिगतोऽविवेकरूपोऽतिशयः । अबुद्धिसारथेः-अविवेकसारथेः ॥ ५ ॥

१ । ३ । ६

[ शांकरभाष्यम् ] [ पृ. ९३ ] **समाहितचित्त इति** । विषयस्मृतियुक्तचित्तनिग्रहे विषयविकल्पात्मकं मनो निगृहीतं भवतीति भावः । **शक्यानीति** । कर्तव्याकर्तव्ययोरिति शेषः ॥ ६ ॥

१ । ३ । ७

[ शांकरभाष्यम् ] **पदमाप्नोतीति** । चेतन इति शेषः । कैवल्यमिति । राजपुरप्रवेशस्थानीयमित्यर्थः । जन्ममरणादिलक्षणं कण्टकपाषाणाद्युपप्लुतदेशतुल्यम् ॥ ७ ॥

[ प्रकाशिका ] [ पृ. ९३ ] **विपरीतचिन्ताप्रवणत्वादिति** । शास्त्रविरुद्धविषयतत्परत्वादित्यर्थः । अविज्ञानवता न केवलं श्रेयोहानिरेव लभ्यतेऽपितु तस्य गहनसंसारप्राप्तिरित्याह–**न केवलमिति** ॥ ७ ॥

१ । ३ । ८

[ शांकरभाष्यम् ] **न जायत इति** । ‘ यद्गत्वा न निवर्तन्ते ’ इति भगवदुक्तेः ॥ ८ ॥

१ । ३ । ९

[ शांकरभाष्यम् ] आत्मस्वरूपस्य नित्याप्तत्वादाप्नोतीति कथमित्याह– **मुच्यत इति** । प्रत्यक्परमात्मावरकाज्ञाननिवृत्तिरेवाप्नोतिपदेन लक्षणया

बोध्यत इति भावः । हिरण्यगर्भं व्यावर्तयति—**वासुदेवाख्यस्येति** । वासुदेव इत्याख्या यस्येति । वासयति भूतानि स्वस्मिन्निति वासुः स चासौ देवश्च दीव्यत इति स्वप्रकाशः स वासुदेव इत्यर्थः । अनेन तत्पदवाच्यमभिहितम् । अधुना तत्पदलक्ष्यमाह—**परमामिति** । अथवा षष्ठी राहोः शिर इतिवदौपचारिकी [ पृ. ५४ ] ससत्त्वम् -स्वरूपम् ॥ ९ ॥

१ । ३ । १०

[ शांकरभाष्यम् ] **सूक्ष्मतारतम्यक्रमेणेति** । विषयमनोबुद्ध्यादिक्रमेणेत्यर्थः । **प्रत्यगात्मतयेति** । न देशपरिच्छिन्नं फलं ब्रह्म किन्तु मोहव्यवहितं मोहापगमे प्रत्यग्रूपेणावस्थानमिति तद्रूपेण साक्षात्कारः संपद्यते । इदं—उत्तरो ग्रन्थः । **तावदिति** । उत्तरोत्तरापेक्षया पूर्वपूर्वस्य स्थूलतां द्योतयति तावच्छब्दः । **यैरिति** । आत्मप्रकाशनाय—विषयज्ञानायार्थैरिन्द्रियाण्यारब्धान्यतोऽर्था इन्द्रियेभ्यः पराः । बुद्धिरात्मेति केषांचिन्मतं तद्दूरीकरणायाह—**बुद्धिशब्दवाच्यमिति** । करणत्वादिन्द्रियबुद्धेर्भौतिकत्वं सिद्धम् । कारणत्वं च स्वबुद्ध्याहमुपलभ इत्यनुभवेन सिध्यति । ततो भूतावयवसंस्थानेष्वेवार्थादिषूत्तरोत्तरं परापरत्वं कल्प्यं परमपुरुषार्थदिदर्शयिषया । नत्वर्थादीनां परत्वं प्रतिपिपादयिषितं प्रयोजनाभावाद्वाक्यभेददोषप्रसंगाच्चेति । सुरनरतिर्यगादिबुद्धीनां विभारकत्वात्समातत्सगमनादात्मोच्यते । सूत्रसंज्ञकं हैरण्यगर्भतत्त्वमित्यर्थः । **बोधाबोधात्मकमिति** । ज्ञानक्रियाशक्त्यात्मकमित्यर्थः । अथवाधिकारिपुरुषाभिप्रायेण बोधात्मकत्वमव्यक्तस्याद्यः परिणाम उपाधिरपंचीकृतभूतात्मकस्तेन रूपेणाबोधात्मकत्वं हिरण्यगर्भस्येत्यर्थः १०

[ प्रकाशिका ] [ पृ. ५४ ] वशीकार्यत्वाय—वशीकरणाय । **दुर्निग्रहत्वादिति** । विषयसंनिधाविन्द्रियाणि निगृहीतुमशक्यानि भवन्त्यतोऽर्थानामिन्द्रियेभ्यः परत्वम् । तदायत्तत्वात्-शरीरायत्तत्वात् । इन्द्रियादिवशीकरणवदीश्वरवशीकरणं नेत्याह—**तस्य च वशीकरणमिति** । भाषितमित्यस्येत्थं हि तत्र भाष्यमित्यनेन संबन्धः ॥ १० ॥

१ । ३ । ११

[ शांकरभाष्यम् ] आरम्भवादं निराकरोति—**अव्याकृतनामरूपसतत्त्वमिति** । अव्याकृतयोर्नामरूपयोः सतत्त्वं स्वरूपमित्यर्थः । ननु सृष्टेः प्रागव्याकृतव्यतिरेकेणाभावात्कथं सर्वेषां कार्याणां कारणानां च शक्तिसमुदायरूपमव्यक्तमिति चेत्प्रलये सर्वशक्तीनामवस्थानं वक्तव्यं शब्दार्थसंबन्ध-

स्य शक्तिलक्षणस्य निर्वाहाय तासां च शक्तीनां मायातत्त्वे समाहारो भवति ब्रह्मणोऽसंगत्वादिति समाहाररूपमव्यक्तमित्यर्थः। सांख्यकल्पितप्रधानाद्वैलक्षण्यमाह—**परमात्मनीति**। ननु शक्तिरेकात्मा चैक इति सद्वितीयत्वापत्तिरित्याशङ्क्य तस्या आत्मव्यतिरेकेणासत्त्वं दृष्टान्तेनाह—**वटकणिकायामिति**। भाविवटवृक्षशक्तिमद्वटबीजं यथा स्वशक्त्या न सद्वितीयं तथा मायाशक्त्या ब्रह्मापि न सद्वितीयमित्यर्थः। यज्ज्ञानार्थमुत्तरोत्तरस्य परत्वमुपपादितं तदवतारयति—**तस्मादित्यादिना**। नन्वात्मनः सूक्ष्मतरत्वं वक्तुं न शक्यतेऽव्यक्तादपि दुर्विज्ञेयत्वात्कारणत्वरूपपरत्वं कथं कारणत्वे वाव्यक्तवद्विकारित्वेनासत्त्वापत्तेरिति चेदधिष्ठानपरतन्त्रत्वादारोपस्याधिष्ठानस्योपचारेणात्मनः कारणत्वमुच्यत इति न दोषः ॥ ११ ॥

१ । ३ । १२

[ शांकरभाष्यम् ] [ पृ. ९६ ] **अनध्वगा इति**। मार्गरहिता इत्यर्थः। स्तम्बः—तृणविशेषः। एतत्तृणप्रियत्वादेव हस्तिनः स्तम्बेरम इत्याख्या। **संवृत इति**। न प्रकाशत इत्यनेनान्वयः। न प्रकाशते चेन्नास्त्येव स इति न मन्तव्यं लिङ्गदर्शनादित्याह—**दर्शनश्रवणादिकर्मेति**। दर्शनश्रवणादीनि कर्माणि लिङ्गभूतान्यस्येत्यर्थः। जीवस्य प्रकाशत्वे ब्रह्मात्मत्वे सत्यपि यो ब्रह्मस्वरूपानवभासः स किंचित्प्रतिबन्धमूलकस्तच्च प्रतिबन्धकं मायैव न वस्तु तत्प्रतिबन्धकं भवितुमर्हति। ज्ञानान्मुक्तिरित्यस्य बाधप्रसंगात्तदाह—**अविद्यामायाच्छन्न इति**। अविद्यापदेन ज्ञाननाश्यत्वं मायापदेन मिथ्यात्वं च बोध्यते। **दृश्यमानमपीति**। घटादिविषयवदात्मभिन्नत्वेन पुरोदृश्यमानमपि ॥ १२ ॥

[प्रकाशिका] [पृ. ९९] **गुणत्रयमायातिरोहितत्वेनेति**। सत्त्वादिगुणत्रयविशिष्टमाययाच्छादितत्वेन। अजितबाह्यान्तःकरणानां—अनिर्जितबाह्यान्तरेन्द्रियाणाम् ॥ १२ ॥

१ । ३ । १३

[ शांकरभाष्यम् ] **वागिति**। वाचमित्यर्थे। ‘ सुपां सुलुक् ’ पा. सू. ७।१।३९ इत्यादिना प्रत्ययस्य लुक्। वाक्पदं सर्वेन्द्रियोपलक्षकं तेन सर्वेन्द्रियाणि मनसि नियच्छेदित्यर्थः। मनआदीनां व्यापिका बुद्धिरतः सा तेषां प्रत्यगात्मा तदाह—**प्रत्यक्स्वरूपामिति**। [ पृ. ९७ ] **प्रथमज इति**। नन्वात्ममहच्छब्दाभ्यां व्यापकप्रत्यगात्मनोऽभिधानात्कथं प्रथमजे हिरण्य-

गर्भे बुद्धौ व्यष्टिबुद्धेः प्रविलापनमित्याशङ्क्य तदुत्तरपर्याये शान्त आत्मेति विशेषणात्प्रत्यस्तमितसर्वविशेषणवत्येतस्य लयप्रतिपादनात्तस्य ग्रहणं न विरुध्यते। नच व्यष्टिबुद्धेः समष्टौ लयश्चेत्तस्याः परमकारणे लयो वाच्यस्तदन्तरेण निर्विशेषो लयः कथमिति वाच्यम्। आत्ममहच्छब्दाभ्यां सकारणसूत्रहैरण्यगर्भबुद्धेर्ग्रहान्न दोष इति भावः। **मुख्य आत्मनीति**। तं यच्छेदित्यन्वयः ॥ १३ ॥

[ प्रकाशिका ] बुद्ध्यात्मनोः सामानाधिकरण्यासंभवं मत्वाह—**व्यधिकरणे इति**। [ पृ. ९७ ] तदितिपदस्य तं कर्तारमित्यर्थो न संभवेदित्याह—**व्यत्ययेनेति**। **भाषितमिति**। भाष्यकृतेत्यनेन संबन्धः। ऊर्मयः षट्। शोकमोहौ जरामृत्यू क्षुत्पिपासे षडूर्मय इत्युक्ताः ॥ १३ ॥

१ । ३ । १४

[ शांकरभाष्यम् ] [ पृ. ९८ ] एवं विषयदोषदर्शनेनाभ्यासेन च बाह्यान्तःकरणव्यापारप्रविलापनेन प्रविलापयितुर्यत्फलं तदाह—**एवमित्यादिना**। नामरूपकर्मत्रयम्—शब्दार्थक्रियात्रिकम्। **मिथ्याज्ञानविजृम्भितमिति**। मिथ्याच तदज्ञानं च तेन विजृंभितं विलसितम्। **मरीच्युदकादीति**। यथा लौकिकः पुरुषो मरीच्यादिदर्शनेन तदुदकादि प्रविलाप्य स्वस्थो भवति तथा सर्वबाह्येन्द्रियव्यापाररहितः कर्तव्याभावात्प्रशान्तान्तःकरणः सन् कृतकृत्यो भवतीत्यर्थः। **आत्मज्ञानाभिमुखा इति**। श्रवणादितत्परा इत्यर्थः। घोररूपायाः—संसाररूपायाः। **तीक्ष्णीकृतेति**। पाषाणादाविति शेषः ॥ १४ ॥

१ । ३ । १५

[ शांकरभाष्यम् ] [ पृ. ९९ ] **तत्रैकैकगुणापकर्षेणेति**। पृथिव्यां गन्धादयः पञ्च गुणाः। जले गन्धरहिताश्चत्वारः। तेजसि गन्धरसरहितास्त्रयः। वायौ गन्धरसरूपरहितौ द्वौ। आकाशे च गन्धरसरूपस्पर्शरहित एकः शब्द एव। एवंच कारणे जलादौ पृथिव्यादिकार्यापेक्षया गुणन्यूनता। तथैव क्रमेणाकाशादेः कारणभूते परे ब्रह्मणि सूक्ष्मत्वविशुद्धत्वनित्यत्वादिकं ज्ञेयमिति भावः। **यावदाकाशमिति**। आकाशमभिव्याप्येत्यर्थः। व्येति विकारं प्राप्नोति। कार्यद्वारा नाशे दृष्टान्तमाह—**यथा कदल्यादेरिति**। फलच्छेदात्प्राक्कदलीवृक्षं छिन्दन्ति। छिन्नफला कदली न दृष्टव्येति सांप्रदायः। एवं फलोद्गमः कदलीविनाशप्रयोजक इत्यर्थः।

**आपेक्षिकं नित्यत्वमिति** । घटापेक्षया महाप्रलयपर्यन्तं स्थायित्वेन यथा पृथिवी नित्या तथापेक्षिकं नित्यत्वं ब्रह्मणो न । तस्य महाप्रलयेऽपि विद्यमानत्वात् ॥ १९ ॥

[ प्रकाशिका ] [ पृ. ९८ ] **कालवदिति** । कालो न व्येतीत्यभिमानः । वस्तुतः कालोऽपि व्ययी । अपचयशून्यं—क्षयशून्यम् ॥१९॥

१ । ३ । १६

[ शांकरभाष्यम् ] ब्रह्मलोक इत्यत्र न षष्ठीसमासो द्वैतापत्तेः । किन्त्ववधारणापूर्वपदः कर्मधारयस्तदाह—**ब्रह्मैव लोक इति** ॥ १६ ॥

**इति प्रथमोऽध्यायः समाप्तः ॥**

अथ काठकोपनिषदि द्वितीयाध्याये प्रथमा वल्ली ।

२ । १ । १

[ **शांकरभाष्यम्** ] [ पृ. ६० ] अनाद्यविद्यारूपः प्रतिबन्धः पूर्वमुक्तोऽधुनागन्तुकप्रतिबन्धः प्रदर्श्यत इति पूर्वोत्तरग्रन्थयोः सम्बन्धमाह—**एष सर्वेष्वित्यादिना** । **इत्युक्तमिति** । अनेन वाक्येनानाद्यविद्याप्रतिबन्ध उक्तः । **यस्मादिति** । स्वयम्भुवा श्रोत्रादीनामिन्द्रियाणां यो बहिर्दर्शनरूपः स्वभावो निरमायि तदेव तेषां हिंसनम् । अयं भावः । यदीन्द्रियाणि मयान्तर्मुखतयान्तर्दर्शनशीलानि क्रियेरंस्तर्हि तान्यात्मनिष्ठानि भवेयुस्ततश्चामृतस्वरूपाणि भवेयुरिति चिन्तयित्वा स्वयंभुवेन्द्रियाणि बहिर्दर्शनशीलानि कृतान्येतदेवेन्द्रियाणां हिंसनम् । **नान्तरात्मन्निति** । अत्र द्वितीयाविभक्तिलोपश्छान्दसः । कश्चिन्नदीतरणनिपुणो नदीरयविमुखं स्वकौशलवशात्तरति तद्वत्कोऽपि धीरः प्रत्यगात्मनि रूढ इत्याह—**प्रतीच्येवेति** । **व्युत्पत्तिपक्षेऽपीति** । रूढमर्थं परित्यज्याप्लृ व्याप्ताविति धातोर्मन्प्रत्ययदृष्ट्यात्मशब्दार्थे क्रियमाणेऽपीत्यर्थः [ पृ. ६१ ] **यच्चाप्नोतीति** । अत्र सर्वत्र यत्पदेन यस्मादित्यर्थो ग्राह्यः । यस्मादयं सर्वान्पदार्थानाप्नोति यस्मात्सर्वविषयान् गृण्हाति यस्माद्भुङ्क्ते यस्मादस्य संततः प्रवाहरूपेण विद्यमानो भावस्तस्मादयमात्मेति कीर्त्यते । सर्वविषयानादत्त आत्मन्येव संहरति तेनायमात्मा जगत उपादानमिति लभ्यते । तथा विषयानत्तीत्यनेनात्मनि स्वचैतन्याभासेनोपलब्धृत्वं लभ्यते । यस्मादस्य संततो भावो घटपटादेः कल्पितवस्तुनस्त्वस्यैव सत्तामनु सत्ता । अधिष्ठानसत्ताव्यतिरेकेण कल्पितवस्तुनः

सत्ताया अभावात्। **आवृत्तचक्षुरिति** ।सर्वविषयेभ्यो व्यावृत्तेन्द्रिय इत्यर्थः। **अनेन** वैराग्यादिसंपत्तिर्बोध्यते ॥ १ ॥

[ प्रकाशिका ] [ पृ. ६१ ] **लोकाभिप्रायमिति** । लोकशब्दमध्याहृत्य पराङिति तस्य विशेषणं कर्तव्यम् । बहिर्दर्शनशीलो लोक आत्मानं न पश्यतीत्यर्थः । पूर्वस्मिन्पक्षेतु पराङिति छान्दसैकवचनघटितामिन्द्रियाणीत्यस्य विशेषणम् । पराञ्चीन्द्रियाण्यात्मानं न पश्यन्तीत्यर्थः । आद्यपक्षेतु परागिति पराचो विषयानित्यर्थे । तेनेन्द्रियाणि पराचो विषयान्पश्यन्ति न त्वन्तरात्मानमित्यर्थः । पुरुषधौरेयः—पुरुषश्रेष्ठः ॥ १ ॥

२ । १ । २

[ शांकरभाष्यम् ] **स्वाभाविकमिति** ।स्वयमेव जायमानं शास्त्रगुर्वाद्यनपेक्षमित्यर्थः । **देहेन्द्रियादीति** । देहेन्द्रियादीनां संयोगस्य यो वियोगः स लक्षणं स्वरूपं यस्येत्यर्थः । अनवरतः—निरन्तरः [ पृ. ६२] **अध्रुवमिति** । परिमितकालपर्यन्तं स्थायित्वादनित्यम् । **ब्राह्मणा इति** । ब्राह्मणपदेन ब्रह्मविदो बोध्यन्ते । जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते । वेदाभ्यासाद्भवेद्विप्रो ब्रह्म जानाति ब्राह्मण इत्युक्तेः ॥ २ ॥

[प्रकाशिका] **यद्वेति** । अस्मिन्पक्षे त इति बाला इत्यस्य विशेषणम् । **अथशब्द इति** । अथशब्देन प्रकृतो योऽर्थोऽज्ञानिविषयकस्तद्भिन्नो ज्ञानिविषयकोऽर्थो ग्राह्य इत्याह—**प्रकृतविपर्ययेत्यादि** । **द्रष्टव्यमिति** । परमात्मैव प्रत्यक्तत्त्वं सर्वजीवस्थाया अहन्तायाः स्थानत्वेन मुख्याहमर्थत्वादित्यर्थः ॥ २ ॥

२ । १ । ३

[ शांकरभाष्यम् ] **कथं तदधिगम इति** । किं वैदिकज्ञानद्वारा परोक्षतयात्मनोऽधिगमोऽथवा घटपटादिवत्प्रत्यक्षत्वेनेति प्रश्नार्थः । **येनेति**। मूढदृष्ट्या रूपरसादिविज्ञानं यद्यपि शरीराभेदेन प्रसिद्धं तथापि सुज्ञानां तद्देहव्यतिरिक्तेनैव केनचिद्भवतीति प्रसिद्धमतोऽत्र प्रसिद्धपरामर्शकेन सर्वनाम्नोक्तिः। **मैथुनानिति** । मिथुनं द्वन्द्वं तदेव मैथुनं तन्निमित्तान् । आयुर्वै घृतमित्यादौ यथायुःसाधने घृत आयुरित्युक्तिस्तद्वन्मिथुननिमित्तसुखादिप्रत्ययेषु मैथुनानित्युक्तिर्लाक्षणिकी । **न त्वेवमिति** । देहादिविलक्षणेनाहं जानामीति कोऽपि न मनुते इति पूर्वपक्षो न युक्त इत्यर्थः । **देहादिसंघातस्येति** । गुणगुणिनोरभेद इति न्यायेन देहादिसंघातस्य शब्दादिस्वरूप-

त्वं ज्ञेयम् । **न युक्तं विज्ञातृत्वमिति** । देहसम्बन्धिनः शब्दादयः स्वात्मानं स्वव्यतिरिक्तं च न जानीयुः शब्दादित्वाद् दृश्यत्वाच्च । बाह्यशब्दादिवत् । यथा बाह्याः शब्दादयः स्वस्वरूपत्वेनात्मानं दृश्यत्वेन च स्वव्यतिरिक्तं द्रष्टारं न जानन्ति तद्वद्दैहिका अपि शब्दादयो न जानन्तीत्यर्थः । विपक्षे बाधकमाह—**यदि हीति** । **येन लोहो दहतीति** । लोहपिण्डो दहतीति प्रतीतौ लोहस्य दाहकत्वं येन कर्त्रा प्राप्तं सोऽग्निरित्यर्थः ॥ ३ ॥

२।१।४

[ शांकरभाष्यम् ] **आहेति** । प्रकारान्तरेणेति शेषः । [पृ.६३] **पूर्ववदिति** । यच्छब्दाक्षेपसमाधानादि सर्वं पूर्वमंत्रभाष्यवदित्यर्थः । **विभुमिति** । महच्छब्देन व्यापकरूपार्थस्य बोधनाद्विभुमित्यस्यैवमर्थः कर्तव्यः । विशेषेण भवत्यस्मादिति विभुस्तं सर्वकल्पनाधिष्ठानभूतमित्यर्थः । **आत्मभावेनेति** । एतदादि परमात्मेत्यन्तं मत्वेत्यस्य कर्म । धीरः—साक्षात्काररूपधैर्यवान् ॥ ४ ॥

२।१।५

[ शांकरभाष्यम् ] यः साधकः कर्मफलभोक्तृत्वोपलक्षितमात्मानं त्वंपदलक्ष्यं कालत्रयेशित्वोपलक्षिततत्पदलक्ष्यं साक्षात्करोति ततः स आत्मानं नरकादिभयाद्रक्षितुं नेच्छतीति प्रकारान्तरेणाह—**किंचेति** । **मध्वदमिति** । मधु-कर्मफलम् । सामीप्यं चात्राभेदः । तेनाभेदेन वेदेत्यर्थः । इदं वर्तमानकालस्याप्युपलक्षणमत आह—**कालत्रयस्येति** । **आत्मन इति** । कर्मणि षष्ठी । आत्मानमित्यर्थः । **पूर्ववदिति** । एतद्वै तदित्यस्य तृतीयमंत्रे योऽर्थः कृतः स एवात्र ग्राह्य इत्यर्थः ॥ ५ ॥

[ प्रकाशिका ] [पृ.६३] **निन्दार्थक उक्त इति** । 'गुपेर्निन्दायाम्' इति वार्तिकात् ॥ ५ ॥

२।१।६

[ शांकरभाष्यम् ] यः कश्चित्पूर्वं तपसो जातं पश्यति स प्रकृतं ब्रह्मैव पश्यतीत्यर्थः, [पृ.६४] **शब्दादीनुपलभमानमिति** । यद्यपि हिरण्यगर्भस्य प्रतिदेहं भोगाभावाच्छब्दादीनुपलभमानमिति वक्तुं न शक्यते तथापि हिरण्यगर्भोऽन्तःकरणांशेन जीवोपाधिरतो जीवतादात्म्यविवक्षया तथोक्तिः । **यदिति** । यथा लोके सुवर्णाज्जायमानं कुण्डलादि सुवर्णमेव भवति तद्वत् ब्रह्मणो जातो हिरण्यगर्भो ब्रह्मैवेति ज्ञेयम् ॥ ६ ॥

[ प्रकाशिका ] **व्यष्टिसृष्टेरिति** । वृक्षा इति व्यष्टिः । वनमिति **समष्टिः** । कटाक्षेण-कृपाकटाक्षेण ॥ ६ ॥

२।१।७

[ शांकरभाष्यम् ] **तिष्ठन्तीमिति** । पूर्ववदन्तःकरणांशेन जीवतादात्म्यापन्नत्वाद्गुहां प्रविश्य स्थितिः । अनेनापि श्लोकेन हिरण्यगर्भ एव विशेषणान्तरेण बोध्यते ॥ ७ ॥

[ प्रकाशिका ] **भाष्यकृतेति** । श्रीभाष्ये रामानुजाचार्येण । **देवतामयीति** । देवताशब्देनेन्द्रियाणां ग्रहणमत आह—**इन्द्रियार्थानेति** । अपृथक्सिद्धविशेषणवाचिशब्दस्येति । अस्यार्थः । पाचको गच्छतीत्यादौ विशेष्यार्थं विना सिद्धिमलभमानो विशेषणशब्दः पाचकादिर्यथा विशेष्यभूतदेवदत्तार्थको भवति तथा विशेषणार्थं विना सिद्धिमलभमानो विशेष्यवाचकशब्दो विशेषणार्थको भवति । एवंच तदिति विशेष्यपदं तदात्मकमिति विशेषणवाचकं बभूव । तदात्मकत्वरूपविशेषणार्थं विना विशेष्यरूपस्य तदित्यर्थस्यैतद्वैतदितिवाक्येऽसंभवात् । इमामेव युक्तिमालम्ब्य 'क्षेत्रज्ञं चापि मां ' इत्यत्र मदात्मकमित्यर्थः । देवामित्यत्र देवात्मकमिति श्रीभाष्यकृत्कृतोऽर्थश्च । तदात्मकमित्यस्यास्वीकारे जीवरूपं यदस्मिन्मंत्रे बोधितं तस्य प्रकृतपरमात्मनश्चैतद्वै तदित्यनेनैक्यं न संभवेदिति भावः ॥ ७ ॥

२।१।८

[ शांकरभाष्यम् ] **उत्तराधरारण्योरिति** । शमीवृक्षस्य द्वे काष्ठे ययोरूर्ध्वाधःस्थितयोर्घर्षणेनाग्निरुत्पद्यते । आभ्यामेव काष्ठाभ्यां यज्ञादावग्निरुत्पाद्यते । तत्रोर्ध्वकाष्ठमुत्तरारणिरधःकाष्ठमधरारणिरिति कथ्यते । **अगर्हितान्नेत्यादि** । गर्भिणीनां श्लेष्मवातकरमन्नं तथा कटुकषायात्मकं पानं नेष्टं तद्भिन्नमनिन्दितमित्यर्थः । **सम्यग्भृत इति** । सम्यक्तया पोषित इत्यर्थः ॥८॥

[ प्रकाशिका ] [ पृ. ६९ ] अवधारणे—एवकारार्थे । अग्निरित्यस्य व्याख्यानमग्रनेतेति ॥ ८ ॥

२।१।१०

[ शांकरभाष्यम् ] [ पृ. ६९ ] सर्वं ब्रह्मेति यदुक्तं तदसंगतं, उपाध्यवच्छिन्नचैतन्यस्य जीवस्य संसारित्वेनोपलभ्यमानत्वेन विरुद्धधर्माक्रान्तयोर्जीवेशयोरैक्यायोगादिति शंका । विरुद्धधर्मस्योपाधिमूलकत्वात् स्वभावतद्धमैक्यं नासंगतमिति वक्तुमुपक्रमते—**यद्ब्रह्मादीति** । इह—जीवोपाधौ

**अविवेकिनमिति** । अविवेकिदृष्ट्या भासमानं नतु वास्तवमित्यर्थः । अमुत्र—कारणोपाधौ । तत्र—जीवेश्वरोपाध्योर्मध्ये । एवं सति—तद्गतचैतन्यैकत्वे सति । **उपाधिस्वभावभेददृष्टिलक्षणयेति** । उपाधिस्वभावश्च भेददृष्टिश्च तौ लक्षणं स्वरूपं यस्यास्तया । अन्तःकरणाद्युपाधेर्भेददृष्टेश्चानिर्वाच्याविद्यां विनोत्पत्तेरसंभव इति भावः । [ पृ. ६६ ] **प्रतिपद्यत इति** । यथा स्वप्ने नानात्वस्वभावरहिते ब्रह्मणि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन व्यवहारः । सच मिथ्याभूतोऽतः पुनः पुनर्जन्ममरणप्राप्तिरज्ञानिन इत्यर्थः ॥ १० ॥

[ प्रकाशिका ] **देशान्तरव्यावृत्ततयेति** । अन्यदेशे नास्मि किन्त्वत्रैव वर्ते इत्यर्थः । [ पृ. ६६ ] तत्त्वज्ञातत्त्वज्ञदृष्ट्योभयथापि पूर्वोक्तशंकाया अनवकाश इत्याह—**अयमभिप्राय इति** । ज्ञानिनां सर्वदेशकालवर्तिपदार्थानां बाधिकाहमिहैवेति प्रतीतिर्न संभवति तेषां सर्ववस्तुवर्तित्वेनाहमिहैवेति प्रतीतेरभावात् । अज्ञानिनामपि सा न । तद्दृष्ट्याहंपदेन जीवस्यैवैकदेशवर्तिनो ग्रहणात् ॥ १० ॥

२।१।११

[ शांकरभाष्यम् ] नन्वेकरसे ब्रह्मणि ज्ञातृज्ञेयविभागः कथमिति चेदज्ञं प्रति तस्य कल्पितत्वादित्याह—**प्रागेकत्वविज्ञानादिति** ॥ ११ ॥

२।१।१२

[ शांकरभाष्यम् ] अङ्गुष्ठपरिणामं जीवमनूद्य ब्रह्मभावो विधीयतेऽनेन वाक्येन ततश्च विधीयमानं यद्ब्रह्म तस्य विरोधः । ब्रह्मणः सर्वव्यापित्वात्तस्यांगुष्ठपरिमाणकेन जीवेनैक्यासंभवादिति शंका स्यात्तामपाकर्तुं जीवस्याङ्गुष्ठमात्रत्वमविवक्षितं वाक्यं तु ब्रह्मपरमेवेत्याह—**पुनरपीति** । **अङ्गुष्ठमात्रवंशेति** । अङ्गुष्ठपरिमाणं वंशस्य वेणुवृक्षस्य यत्पर्व तन्मध्यस्थाकाशवत् । वेणुमध्यस्थाकाशस्योपाधिना यथा पर्वपरिमाणत्वं तथान्तःकरणोपाधिना जीवस्याङ्गुष्ठपरिमाणत्वमित्यर्थः ॥ १२ ॥

[ प्रकाशिका ] [ पृ. ६७ ] जीवपरोऽयं मन्त्रः स्यादिति शङ्कते—**नन्विति** । कालत्रयवर्तिपदार्थानां नियमनं जीवे न संभवत्यतो न जीवग्रहणमिति शङ्कां निरस्यति पूर्वपक्षी—**न चेति** । **प्रथमश्रुतस्येति** । अयं हि मीमांसकानां सिद्धान्तः । यदुपक्रमोऽसंजातविरोधी भवति । तत्रान्यस्यार्थसंकोचकारिणो लिङ्गस्य प्रवृत्त्यभावात् । एवं चोपक्रमे यथाश्रुतोऽर्थः प्रतिपत्त-

व्यस्तदनुरोधेनान्येषां तदनुसारिवाक्यानामर्थः कर्तव्यस्तथा चात्रोपक्रमे जीव-वाक्यं तदनुसारं भूतभव्येशित्वं लापनीयमर्थाज्जीवेन येषां नियामकत्वं संभवति तादृशा एव पदार्थो भूतभव्यपदेन ग्राह्याः। एवंच भूतभव्येशानत्वस्य जीवानुकूलं संकोचः कर्तव्य इति भावः। उत्तरपक्षी खण्डयति—**न शब्दादेवेत्यादि। असंकुचितेत्यादि।** असंकुचितं जीवपरत्वेन संकोचं न प्रापितं यद्भूतभव्येशितृत्वं तद्ब्रह्मणो लिङ्गं चिन्हं, इदंहि चिन्हमनन्यथासिद्धमर्थादन्यथासिद्धिरहितम्। अयं भावः। अङ्गुष्ठमात्रपदेन श्वेताश्वतराद्युक्त्या ब्रह्मणो ग्रहणे भूतभव्येशितृत्वं तत्रैव संगच्छते। जीवादिपरतया तन्नैव संगच्छेतेत्यर्थः। उपक्रमस्यासंजातविरोधित्वेन जीवसाधकत्वमित्यपि न। तैतिरीयकश्वेताश्वराद्युक्त्या तस्याङ्गुष्ठमात्र इतिपदस्य परमात्मपरत्वात्। शांकरभाष्योक्तार्थं दूषयति—**यत्त्विति। आराग्रमात्रतयेति।** 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति श्रुतेः। **व्यासार्यैरिति।** 'शब्दादेव प्रमित' ब्र. सू. १।३।२४ इति सूत्रस्थस्य श्रीभाष्यस्य व्याख्याने व्यासार्यपण्डितेन 'ईश्वरः शर्व ईशानः' इति निघण्टुपाठाद्देवता विशेषवाचको हीशानशब्दः शब्दादेवेति शब्दपदेनादृतः। तेन जीवस्य व्यावृत्तिः कृता यतो जीवे कर्मवशे सर्वेशितृत्वं न संभवतीति। अत्रैवं शंका—निघण्टुपाठे देवताविशेषे रूढोऽयमीशानशब्द इति पठितं तेन यथा जीवव्यावृत्तिस्तथा नारायणस्यापि व्यावृत्तिः स्याद्यतो नारायणवाचकत्वमीशानशब्दस्य निघण्टौ नास्ति। तेन नारायणस्यैव सर्वेशितृत्वं न रुद्रादेरिति वैष्णवाभिमतं मतं विहन्येतेति। एतां शङ्कां स्वमतेन निराकरोति—**न योगरूढिमत इति।** अयं भावः। योगरूढं पदं पङ्कजादि तत्रावयवार्थं गौणं कृत्वा रूढ्यर्थभूतं कमलादिरूपं मुख्यं स्वीकुर्वते। परं त्वेतादृशेऽपि पदे योगरूढेराधिक्यं नाङ्गीकार्यं यदि तत्संनिधाववयवार्थद्योतिपदान्तरं स्यात्। अत्र दृष्टान्तः। पद्मानि यस्याग्रसरोरुहाणीत्यादि। अत्र सरोरुहपदं योगरूढं सरसि रोहतीति योगस्यात्र संभवात्। तथा सरोरुहपदस्य कमले रूढिश्च। परमत्र रूढिर्गृहीतुं न शक्यते। अत्र 'अग्रसरोरुहाणि' इति पदं, सरोरुहपदेन रूढिप्राधान्यात्कमलार्थस्वीकारेऽग्र इत्यस्यार्थो न संभवेदतोऽयमर्थः। अग्रे पुरोभागे यानि सरांसि सरोवराणि तत्र रोहन्ति प्रादुर्भवन्तीत्यवयवार्थ एव ग्राह्यः। किंच रूढार्थपरिग्रहे पद्मानीति पुनरुक्तं स्यात्। एवं चात्रोदाहरणे रूढार्थस्य त्यागः। एवं दार्ष्टान्तिके 'ईशानो भूतभव्यस्य' इति

वाक्ये ईशानपदं योगरूढं तद्रूढ्या रुद्रस्य बोधकं, योगेन यस्य कस्यचिदीशितुर्बोधकम्। समीपस्थं पदं भूतभव्यस्येति। तत्र भूतभव्यस्येशनकारित्वं वैष्णवमतेन रुद्रे न संभवत्यतः समीपस्थेन भूतभव्येतिपदेनेशानशब्दस्य रुद्ररूपो रूढोऽर्थस्त्याज्यते। यौगिक ईशनकर्तृत्वरूपो ग्राह्यते चेति [पृ.६८] **न श्रुतित्वमिति**। अतः केवलेशानशब्दो न परमेश्वरग्राहकः किन्तु भूतभव्यस्येतिपदघटितेशानशब्द इत्यर्थः। समाधानान्तराश्रयणात्पूर्वसमाधानं न वरमिति व्यासार्यमतेऽपि सिध्यतीत्याह—**यद्वेति**। **अतिचर्चयेति**। स्वकृतोपनिषद्व्याख्यानसमये सूत्रभाष्यव्याख्यानस्य व्यासार्यकृतस्य युक्तायुत्वविचारणारूपा चर्चातिचर्चेति भावः। स्वविषयमतिक्रम्य चर्चातिचर्चेति पदार्थः ॥ १२ ॥

२ । १ । १३

[ शांकरभाष्यम् ] [ पृ. ६८ ] नायमस्तीति चैक इति द्वितीयपक्षस्योत्तरभूतमिदं वाक्यमाह—**किंचेति**। **ज्योतिष्परत्वादिति**। ज्योतिःशब्दस्य नपुंसकलिङ्गत्वेन तद्विशेषणत्वादिदमधूमकमित्यपेक्ष्यत इति भावः। **कूटस्थ इति**। कूटं गिरिशृंगं तदिव तिष्ठतीति चिरं वर्षातपयोर्विद्यमानं गिरिश्रृंगं विकारं न लभ्यते न वा क्षीयते यथा तथा ब्रह्मेत्यर्थः। **न्यायत इति**। कृतहानाकृताभ्यागमप्रसंगरूपन्यायात्। **क्षणभंगवादश्चेति**। बौद्धसंमतोऽयं वादः ॥ १३ ॥

२ । १ । १५

[ शांकरभाष्यम् ] [ पृ. ६९ ] **कुतार्किकेत्यादि**। कुतार्किका आत्मभेदं बोधयंति। आत्मा द्विविधः। जीवात्मा परमात्मा चेति। परमात्मा त्वेक एव। जीवात्मानस्त्वनंता इति तार्किकमतम्। ततस्तदनुसरणाद्विपरीतभावना। नास्तिकाश्चार्वाकादयो नास्त्यात्मेति बोधयंति ततोऽसंभावना। एवमुभे असंभावनाविपरीतभावने वेदेन निराक्रियमाणे नानुसर्तव्ये इति भावः ॥ १५ ॥

अथ कठोपनिषदि द्वितीयाध्याये द्वितीया वल्ली ॥

२ । २ । १

[ शांकरभाष्यम् ] **प्रकारान्तरेणेति**। उपायान्तरेण तदेव ब्रह्मतत्त्वं बोध्यते। उपायभेदेऽपि प्राप्यवस्तुनो न भेदः किन्त्वेकत्वमेवेति भावः। **असंहतराजेत्यादि**। पुरेणासंहतो यो राजादिः स्वामी तदर्थं यथा तत्त-

था **शरीरेणासंहतस्तत्स्वामीत्यर्थः।** पुरस्योपचयापचययोः स्वामिन उपचयापचयाभावात् स्वामिनः पुरेणासंहतत्वम्। **शीर्षण्यानीति**। शिरसि भवानि नेत्रकर्णमुखनासिकारूपाणि। **अर्वाञ्चीति**। अधोभागस्थानीत्यर्थः। **जन्मादीति**। अस्ति, जायते, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति चेति षड्भावविकाररहितस्य ॥ १ ॥

[प्रकाशिका] [पृ.७०] **भोगेनेत्यादि**। अस्य सूत्रस्यायमर्थः। इतरे आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमाप्त्यनन्तरं ब्रह्म संपद्यते। **विरजामिति**। मुक्तविषय एवमुक्तं यतीन्द्रमतदीपिकायाम्-मुक्तो नामोपायपरिग्रहानंतरं नित्यनैमित्तिकभगवदाज्ञाकैंकर्यरूपाणि स्वयंप्रयोजनतया कुर्वन् भगवद्भागवतापराधांश्च वर्जयन्देहावसानकाले सुकृतदुष्कृते मित्रामित्रयोर्निक्षिपन् वाङ्मनसीत्यादिप्रकारेण हार्दपरमात्मनि विश्रम्य ब्रह्मरंध्रानिष्क्रम्य हार्देन साकं सूर्यकिरणद्वाराग्निलोकं गत्वा दिनपूर्वपक्षोत्तरायणसंवत्सराभिमानदेवताभिर्वायुना च पथि सत्कृतः सूर्यमण्डलं भित्त्वा नभोरंध्रद्वारा सूर्यलोकं गत्वानन्तरं चंद्रविद्युद्वरुणेन्द्रप्रजापतिभिर्मार्गदर्शिभिरातिवाहिकगणैः सोपचारैः सह तत्तल्लोकानतीत्य प्रकृतिवैकुंठसीमापरिच्छेदिकां विरजां तीर्त्वा सूक्ष्मं शरीरं विहायामानवकरस्पर्शादप्राकृतदिव्यविग्रहयुक्तश्चतुर्भुजो ब्रह्मालंकारेणालंकृत इंद्रप्रजापतिसंज्ञकनगरद्वारपालकाभ्यनुज्ञया श्रीवैकुठाख्यं दिव्यनगरं प्रविश्य गरुडानन्तयुक्तपताकालंकृतदीर्घप्राकारसहितगोपुरमतीत्य ऐरंमदाख्यामृतसरःसोमसवनाख्याश्वत्थं च दृष्ट्वा शतमालाहस्तेत्युक्तपञ्चशतदिव्याप्सरोगणैरुपचरितो ब्रह्मगन्धादिभिरलंकृतस्तत्रत्यानन्तगरुडविष्वक्सेनादीन्प्रणम्य तैर्बहुमतो महामणिमण्डपमासाद्य पर्यंकसमीपे स्वाचार्यान् प्रणम्य पर्यंकसमीपं गत्वा धर्मादिपीठोपरि कमलेऽनन्ते विमलादिभिश्चामरहस्ताभिः सेव्यमानं श्रीभूनीलादिसमेतं शंखचक्रादिदिव्यायुधोपेतं जाज्वल्यमानाकिरीटमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकांचीगुणनूपुराद्यपरिमितादिव्य—भूषणैर्भूषितमपरिमितोदारकल्याणगुणसागरं भगवन्तं दृष्ट्वा तत्पादारविन्दयुगलं शिरसा प्रणम्य पादेन पर्यंकमारुह्य तेन स्वांके स्थापितः कोऽसीति पृष्टः ब्रह्मप्रकारोऽस्मीत्युक्त्वा तेन कटाक्षितस्तदनुभवजानितहर्षप्रकर्षात्सर्वदेशकालसर्वावस्थोचितसर्वकैंकर्यरतिराविर्भूतगुणाष्टक उत्तरावधिरहितब्रह्मानुभववान्यः स मुक्त इत्युच्यते ॥ १ ॥

२ । २ । २

[ शांकरभाष्यम् ] [ पृ. ७० ] ननु वेदीशब्देन चतुरङ्गुलखाता भूमिरुच्यते श्रौतादौ । अत्र वेदीशब्देन पृथ्वी गृह्यते तत्कथमत आह—**इयमिति** । या यज्ञे प्रसिद्धा वेदिः सा पृथिव्याः परोऽन्तः परस्वभाव इति वेद्याः पृथिवीस्वभावत्वकथनात्पृथिवी वेदिशब्दवाच्या भवतीत्यर्थः । ननु ब्राह्मणोक्तार्थविरुद्धमिदं व्याख्यानं तत्र ' असौ वा आदित्यो हंसः ' इति व्याख्यातम् । ब्राह्मणं च श्रुतेः प्राचीना व्याख्या तदनुसारमेव श्रुतेरर्थः कर्तव्य इत्याह-**यदापीति** । ' सूर्य आत्मा जगतस्तस्थुषश्च ' इति मन्त्रान्मण्डलोपलक्षितचिद्धातोरिष्यत एव सर्वात्मत्वमित्यर्थः ॥ २ ॥

२ । २ । ३

[ शांकरभाष्यम् ] [ पृ. ७१] **यदर्था इत्यादि** । सर्वे प्राणकरणव्यापाराश्चेतनार्थास्तत्प्रयुक्ताश्च भवितुमर्हन्ति जडव्यापारत्वाद्रथादिव्यापारवत् ३

२ । २ । ४

[ शांकरभाष्यम् ] शरीरं चेतनाङ्गं तद्विगमे भोगानर्हत्वाद्राजपुरवदित्याह—**किं चेति** । विद्रवणं—पलायनम् । पुरस्वामिनो निर्गमे यथा पौरा अन्यत्र गच्छन्ति तद्वदित्यर्थः । **हतबलमिति** । चेतनारूपं संघातस्य बलं तच्छून्यम् ॥ ४ ॥

२ । २ । ५

[ शांकरभाष्यम् ] **स्यान्मतमिति** । एवं यदि तव मतं स्यादित्यर्थः । [ पृ. ७२ ] ' जीव प्राणधारणे ' इति धात्वर्थानुसारं शरीरस्य जीवनं नाम प्राणधारणं प्राणसंयोगश्च प्राणधारणं कुण्डे दधिधारणवत्तत्र च प्राणस्यैव हेतुत्वं संयोगाश्रयत्वात्कथमुच्यते जीवनहेतुत्वं प्राणादीनां न संभवतीति चेत्तत्राह—**स्वार्थेनासंहतेनेति** । इमामन्यथासिद्धिं परिहरति—**नैतदिति** । **संहत्यकारित्वादिति** । लोके ह्ययं नियमः । ये संघातेन कार्यं कुर्वन्ति ते परप्रयुक्ताः परार्थाश्च भवन्ति यथा स्वामिकार्यकारिणो बहवो भृत्याः । अचेतनतां द्योतयितुं गृहादीनां वा दृष्टान्तो ग्राह्यः । **अन्यः सिद्ध इति** । प्राणापानादेः प्रयोजकः कोऽप्यतिरिक्तः सिद्ध इत्यर्थः ॥ ५ ॥

२ । २ । ६

[ शांकरभाष्यम् ] परलोकविषये य आसीत्संशयस्तन्निवृत्त्यर्थमुच्यते- हन्तेदानीमिति ॥ ६ ॥

[ प्रकाशिका ] [ पृ. ७२ ] **स्वगतामिति** । अहो अहं त्वां गुह्यं ब्रह्म प्रवक्ष्यामीति यमस्याश्चर्यम् ॥ ६ ॥

२ । २ । ७

[ शांकरभाष्यम् ] विज्ञानं उपासनं नग्नस्त्रीदर्शनादि च । संभवाः— प्रजाः ॥ ७ ॥

२ । २ । ८

[ प्रकाशिका ] [ पृ. ७३ ] **णमुलन्तामिति** । कामित्वा कामित्वेति त्क्त्वाप्रत्ययान्तस्यार्थे कामं काममिति । छन्दतः :इच्छातः । प्रत्युक्ता—खण्डिता । अद्वैतिमते मुक्तपरमात्मनोरभेदस्तं निराकर्तुमेतद्वाक्यं विशिष्टाद्वैतमते कदापि मुक्तपरमात्मनोरभेदो न भवति ॥ ८ ॥

२ । २ । ९

[ शांकरभाष्यम् ] [ पृ. ७३] तार्किका हि जन्ममरणकारणानां प्रतिप्राणिनियमाद्युगपत्तेषामप्रवृत्तेश्च पुरुषबहुत्वं सत्त्वरजस्तमोगुणाविपर्ययाच्च नानात्मानो व्यवस्थिता नतु पुरुषैकत्वमिति प्रतिपादयन्ति तन्निरासार्थमस्य मंत्रस्यावतार इत्याह—**अनेकतार्किकेति** । **अनृजुबुद्धीनामिति** । कुटिलचेतसामित्यर्थः । वेदान्तमतानुसारित्वं सरलबुद्धित्वं तद्विरुद्धमतानुसारित्वं कुटिलबुद्धित्वामिति भावः । **दार्वादिदाह्यभेदमिति** । काष्ठादिदाह्यपदार्थानित्यर्थः । [पृ. ७४] **प्रतिरूप इति** । उपाध्यनुसारमित्यर्थः । चतुष्कोणत्वादिधर्मके दारुणि वन्हिरपि तथैव लक्ष्यत इत्यर्थः ॥ ९ ॥

[प्रकाशिका] [पृ. ७४] **त्रिवृत्करणकृतव्याप्त्येति** । छान्दोग्योपनिषदि'तत्तेजोऽसृजत' इत्यादिना तेजोऽबन्नानां तेजोजलपृथिव्यपरपर्यायाणां सृष्टिमुक्त्वा तदेकीकरणं पंचीकरणप्रकारानुसारमेवाम्नातं तासां त्रिवृतं त्रिवृतमेकैकां करवाणीत्युक्त्त्या । ततश्च तेज एव सर्वपदार्थेषु व्याप्तं तस्यैव पर्यायवाचकोऽग्निशब्दोऽत्र गृहीतः। **प्रत्युप्तमिति**। 'टुवप् बीजसन्ताने' इति धातोः क्तान्तस्य रूपम् । प्रतिसंक्रान्तं—प्रतिबिम्बितम् ॥ ९ ॥

२।२।११

[शांकरभाष्यम्] **सर्वात्मत्व इति**। दुःखिना जीवेन साकमैक्येऽस्यापि

दुःखित्वमिति भावः । अविद्यायां प्रतिबिम्बितश्चिद्धातुरज्ञो भ्रान्तो भवति। भ्रान्तश्च कामादिदोषप्रयुक्तः कर्म कुरुते तन्निमित्तं च दुःखं स्वात्मन्यध्यस्यति। परमात्मा त्वविद्यारहितत्वाद्दुःखसाधनशून्यत्वान्न दुःखी ततो दुःख्यभेदरूपो हेतुर्न पूर्वोक्तानुमानप्रयोजक इत्याह—**लोको हीति** । चैतन्यस्योपाधिस्वरूपेणाध्यासाश्रयत्वेऽपि निरुपाधिकबिम्बकल्पब्रह्मरूपेणाध्यासानाश्रयत्वान्न दुःखित्वप्राप्तिरित्यर्थः ॥ ११ ॥

[ प्रकाशिका ] [ पृ. ७९ ] **स्वेतरेत्यादि** । स्वमात्मा तदितरे ये समस्ताः पदार्थास्तद्बहिर्भूतत्वादित्यर्थः ॥ ११ ॥

२।२।१२

[शांकरभाष्यम्] [ पृ.७९]स्वापेक्षया परस्योत्कर्षदर्शनं पारतंत्र्यं तथाच स्वस्य हीनत्वं दुःखकारणं लोके प्रसिद्धं तदुभयाभावान्न परमात्मनो दुःखित्वं ततोऽदुःखिपरमात्मप्राप्तिः परमपुरुषार्थो भविष्यतीत्याह—**किंचेति** । **नहीति** । शरीरमात्मन आधारो नेत्यर्थः । **आदर्शस्थमिति** । आदर्शो मुखस्याधारो न किन्तु मुखप्रतिबिम्बमादर्शे दृश्यते तथाप्यादर्शस्थं मुखमिति लोके व्यवहारस्तद्वच्छरीरस्थ आत्मेति व्यवहारः ॥ १२ ॥

[ प्रकाशिका ] **समाभ्यधिकरहित इति** । न कोऽपीश्वरेण तुल्यो न वा तदधिकः । **वशवर्तिप्रपंचक इति** । बहुव्रीहिः ॥ १२ ॥

२ । २ । १३

[ शांकरभाष्यम् ] परमात्मन्युपपत्तयः प्रदर्श्यन्ते—**नित्य इति** । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रुतेरकृताभ्यागमकृतविप्रणाशप्रसंगपरिहाराच्च कल्पान्तरीयपदार्थानां प्रलये लीयमानानां कल्पान्तरे सजातीयरूपेणोत्पत्तिः स्वीक्रियते। सा चोत्पत्तिर्विनाशिपदार्थानां शक्तिशेषाङ्गीकारं विना न संभवति । यतो यदि तत्तत्पदार्थशक्तिशेषः स्यात्तदैव तस्मात्पदार्थशक्तिशेषात्कल्पान्तरे पूर्वसजातीयाः पदार्थाः संभवेयुरिति । एवंच शक्तिशेषोऽवश्यमंगीकार्यः । तस्य चाधारं विना प्रलयेऽसंभवात्तदाधारभूतः परमात्मावश्यं स्वीकार्यः । **चेतनानामिति** । ब्रह्मादिशब्दवाच्यानां संघातानां वा चेतयितृत्वं यन्निमित्तं सोऽस्ति परमात्मेत्यर्थः । सेवाफलवत्कर्मफलं यल्लभ्यते तदपि कर्मफलनिरीक्षकमीश्वरं गमयतीत्याह—**किंचेति** ॥ १३ ॥

२।२।१४

[ शांकरभाष्यम् ] [ पृ. ७६ ] परमानन्दे विद्वदनुभवोऽपि प्रमाणमित्याह—**यत्तदात्मविज्ञानमिति** । विद्वत्प्रत्यक्षत्वादसंभावनयात्मदर्शनं न जिहासितव्यं किंतु श्रद्दधानतया विचारयितव्यमित्याह—**कथं न्विति** १४

२।२।१५

[ शांकरभाष्यम् ] **जलोल्मुकादीति** । जलं, तप्तजलं, उल्मुकं—अलातं, आदिपदेनायःपिण्डादयो गृह्यन्ते ॥ १५ ॥

[प्रकाशिका] [पृ.७६] **योगयुगालम्बनायेति** । योगयुजो योगिनस्तेषामाश्रयनिमित्तम् । **प्रमाणप्रतिपन्नेत्यादि** । प्रमाणेन प्रतिपन्नो घटितो यो गुहाश्रयो हृदयगुहाश्रयो दिव्यमङ्गलविग्रहः । अयमर्थः । आदित्यवर्णं तमसः परस्तात् । परमेश्वररूपमिति श्वेताश्वतरोपनिषत्प्रमाणेन सदैकरूपरूपायेति वाक्ये सदैकरूपं समानं रूपं यस्येति कथनरूपप्रमाणाच्च परमात्मनो योगिजनाश्रयनिमित्तं हृदयगुहाश्रयीभूतः कश्चन दिव्यो मंगलावहश्च देहो वर्तते तद्वान् स सर्वातिशायितेजोवानिति । [ पृ. ७७ ] **पौर्वापर्यनियम इति** । ' अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता । कारणत्वं भवेत्तस्य' इति भाषापरिच्छेदोक्त्यनुसारं पूर्वं-कारणं, अपरं—कार्यं तद्भावः—कार्यकारणभावः । पौर्वापर्येत्यत्र कार्यकारणेत्यत्र वाल्पाच्तरत्वात्पूर्वनिपातः।यथासंख्यमन्वये त्वर्थवैपरीत्यं स्यात् । **भामुपयुज्येति** । यस्य परमात्मनो भामुपयुज्य प्रकाशस्योपयोगं कृत्वादित्यो भातीत्यर्थः । **अभिभूतत्वमिति** । तस्याधिकप्रकाशत्वादित्यर्थः । **तेजोऽन्तरोत्पत्ताविति** । अन्यत्तेजस्तेजोऽन्तरं चक्षुरादितेजोऽनुग्राहकं चन्द्ररूपं तेजोऽन्तरं तदुपादानद्रव्यं सूर्यरूपं तेजस्तदनुग्राहकत्वं परमात्मभासि परमात्मप्रकाशे । **तृतीयपादार्थ इति** । तमेव भान्तमित्यादिरूपस्तृतीयपादः । **चाक्षुषेत्यादि** । चाक्षुषकिरणानुग्राहकचन्द्रादिवदुत्पन्नमपि तेजः स्वकार्यकरणे चक्षुरादीनां घटादिप्रकाशने सामर्थ्यं भवत्विति तदाधायकत्वं तत्स्थापकत्वरूपो योऽनुग्रहस्तत्कारित्वं तस्य भासेत्यादिचतुर्थपादस्यार्थः । अयं भावः । परमात्मा चक्षुरादि चन्द्रसूर्यादि वा तेज उत्पादयति तस्मिन् घटपटादिप्रकाशकत्वरूपं सामर्थ्यं च निदधाति । इदानीमद्वैतिमतं खण्ड्यते—**अधिष्ठानेत्यादिना** । तमेव भान्तमनुभातीति तृतीयपादे यच्छांकरभाष्यं तत्रतु नैवमर्थः । अन्यत्र कस्यचिदुक्तिः स्यात्सा मृग्या । अध्यस्तप्रपंचे यद्धि भानं तदधिष्ठानभूतब्रह्मभानमूलं न तद्व्यतिरिक्तमिति

पराभिप्रायः। **तदयुक्तमिति**। अनुभातीतिपदस्थानुपदस्यास्वारस्यात्। तदेव विवृणोति—**तथाहीति**। भान्तमित्यत्र भाधातोरेव शतृप्रत्ययः कर्त्रर्थकः। भातीत्यत्रापि कर्त्रर्थक एव तिप्प्रत्ययः। तयोश्च शिष्यज्ञानं प्रकाशत इति दृष्टान्तवदभेदेऽपि संभवः। तथाहि शिष्यज्ञानं प्रकाशत इत्युदाहरणे गुरुणा शिष्यायोपदिष्टं यज्ज्ञानं तत्प्रकाशत इत्यर्थः। गुरुज्ञानानन्तरं जायमानं शिष्यज्ञानं प्रकाशते। एवंच गुरुशिष्यज्ञानप्रकाशयोर्यथा न भेदः किन्त्वभेदस्तथा दार्ष्टान्तिकेऽप्यात्मभाननिमित्तं सूर्यादीनां भानं तेनात्मसूर्ययोर्भानस्याभेदेऽप्यनुभातीतिपदस्थानुशब्दो न घटते। दृष्टान्तेतु प्रकाशत इत्येव पदं न त्वनुप्रकाशत इति। अधिष्ठानब्रह्मभानव्यतिरिक्तं सूर्यादेर्भानं नास्तीति स्वीकारे यानुपपत्तिस्तामाह दृष्टान्तपूर्वकं—**नहीति**। यत्र देवदत्तस्य गमनमेव यज्ञदत्तस्य गमनं स्वयं तु यज्ञदत्तो न गच्छति केवलं तिष्ठत्येव तत्र गच्छन्तं देवदत्तं यज्ञदत्तोऽनुगच्छतीति वाक्यप्रयोगो न दृष्ट इत्यर्थः। दृष्टचर इत्यत्र पूर्वं दृष्टो दृष्टचर इति भूतपूर्वे चरट्। अनुपपत्तिभेदं शंकते दृष्टान्तान्तरेण-**नन्विति**। वन्हिं दाहकमनु लोहं दहतीति प्रयोग उपलभ्यते:तत्र वन्हिदहनक्रियाव्यतिरिक्तदहनक्रियाशून्यं लोहं तद्वदत्राप्याधिष्ठानब्रह्मरूपभानव्यतिरिक्तभानशून्यत्वमादित्यादीनामनुशब्दप्रयोगेऽपि संगच्छेतेति शङ्कार्थः। समाधत्ते—**नेत्यादिना**। लोहस्य वन्ह्यपेक्षया पृथग् दग्धृत्वं नास्तीति यस्य निश्चितं ज्ञानं तेन पुरुषेणेदृशप्रयोगस्यासंप्रतिपन्नत्वादनङ्गीकृतत्वात्। अयं भावः। वन्हिं दहन्तमयोऽनुदहतीति प्रयोगो येन कृतः सोऽयसो दग्धृत्वाभावं न निश्चिनोति तन्मतेऽयसोऽपि दग्धृत्वस्य सत्त्वात्। यश्चायसो दग्धृत्वं नास्ति किन्तु वन्हेरेवेति निश्चितज्ञानवान्स तादृशप्रतिपादनेच्छया वन्हिं दहन्तमयोऽनुदहतीति प्रयोगं नैवाङ्गीकुरुते। अतश्चायं प्रयोगोऽनिश्चितज्ञानवतस्तेन न दोषः। प्रकृतश्रुतिस्तु सिद्धान्तभूता तत्र दृष्टान्तवदनिश्चितज्ञानवत्त्वं वक्तुर्नाङ्गीकर्तुं शक्यते तेनानुशब्दस्यानुपपत्तिरेव। स्वाभिमतार्थं शङ्कते—**नन्विति**। मुक्तानां ब्रह्मतेजसः सूर्यादितेजसश्चेत्युभयाविधस्य प्रत्यक्षं भवति तत्रैकस्याभिभवो न वक्तुं शक्यते। अभिभवनं नाम सजातीयस्य तेजसः संमिश्रणेन तस्य तदितरस्य चाग्रहणं यथा चन्द्रतेजसः सूर्यतेजःसंवलनादग्रहणं प्रकृतेतु ब्रह्मतेजसो विजातीयत्वात्संवलनाभाव इति शङ्कार्थः। समाधत्ते—**बद्धविषयमेवैतदिति**। मुक्तविषये तथात्वेऽपि बद्धविषयेऽभिभवनं स्यादित्यर्थः। ननु बद्धानां साक्षात्कारो न स्यादिति कथमिदं समा-

ध्यानमिति चेदर्जुनादीनां बद्धानामेव कृष्णादिसाक्षात्कार इत्याह पूर्वोत्तरपक्षाभ्यां—**बद्धानामित्यादिना** । वस्तुतस्त्वर्जुनादीनां बद्धानां साक्षात्कारः शास्त्रविरुद्ध इति मत्वाह—**यद्वेति** । कालिदासकवेरधिककवित्वगुणवत्त्वादितरकवेः कुकवित्वमकवित्वं तदभाव इतरोऽपि कविरेव । 'उदिते तु सहस्रांशौ न शशाङ्को न तारकाः' इतिवत्। [ पृ.७८ ] उत्तरार्धस्यार्थान्तरमाह—**यद्वेति । अतो याचितकेत्यादि** । लौकिका हि विवाहादिप्रसङ्गेऽन्येभ्यो भूषणादिकमादाय स्वशरीरं भूषयन्ति तद्यथा भूषणभूषितशरीरं न भात्यन्यस्वामिकभूषणभूषितत्वात्तद्वत्सूर्यादीनां तेजो न भाति ब्रह्मस्वामिकत्वात्तत्तेजसः । याचितकं याचनयानीतं ' याञ्चयाप्तं याचितकम् ' इत्यमरप्रामाण्यात् । तेन मण्डिता भूषिता ये पुरुषास्तैस्तुल्या आदित्यादय इति भावः॥ १९॥

अथ काठकोपनिषदि द्वितीयाऽध्यायस्य तृतीया वल्ली ।

२।३।१

[ शांकरभाष्यम् ] [ पृ. ७८ ] **तूलावधारणेनैवेति** । शाल्मल्यादितूलावधारणेन यथा तन्मूलावधारणं क्रियते तथात्र संसाररूपवृक्षावधारणेन तन्मूलं ब्रह्म ज्ञायत इत्यर्थः । वाचस्पत्ये तूलशब्दस्यैवमर्थं प्रदर्श्य गुणोऽपि दर्शितः । तथाहि—तूलशब्दोऽश्वत्थाकारे तूलवृक्षे ( पार्श्वपिप्पल इति ख्याते ) भावप्रकाशे—तूलं पक्वं गुरु स्तंभि हिमं पित्तानिलापहम् । तदेवामं सुमधुरं संशोषि रक्तपित्तत्हृत् ॥ एवंच तूलशब्दः शाल्मल्यादिकार्यवाचकः । कार्पासो यथा फलनिर्गतत्वाद्वृक्षकार्यं तद्वत्संसाररूपं कार्यं ब्रह्ममूलस्य । ततश्च कार्यद्योतकस्तूलशब्दः । मूलाविद्याप्रतियोगिभूतेन तूलाविद्याशब्देन कार्यस्यैवाभियुक्तग्रन्थे द्योतितत्वात् । लौकिकवृक्षतो वैलक्षण्यामाह-**ऊर्ध्वमूल इति । व्रश्चनादिति** । ' ओव्रश्चू छेदन ' इति धातोर्वृक्ष इति रूपम् । दात्रेण लौकिवृक्ष इवायं ज्ञानेन छेद्य इत्यर्थः । **जन्मजरेत्यादि** । जन्मादयो येऽनेकेऽनर्थास्तदेवात्मा स्वरूपं यस्येत्यर्थः । जन्माद्यनर्थातिरिक्तं संसारस्य स्वरूपमेव नेत्यर्थः । अन्यथास्वभावः—विपरीतस्वभावः । एतेन चंचलत्वं द्योतितम्। **मायेत्यादि** । माया—ऐन्द्रजालिकविद्या । मरीच्युदकंमृगजलम् । यतः सूर्यकिरणसंबन्धाद्वालुकादि जलवद्भासतेऽतस्तन्मरीचिजलमुच्यते । गन्धर्वनगरमितिपदेन सायंकाले चंचलस्वभावा य आकाशे मेघादिसंनिवेशा दृश्यन्ते तेषां ग्रहणम् । **दृष्टनष्टस्वरूपादिति** । आदौ दृष्टं पश्चान्नष्टं स्वरूपं यस्येति । दर्शनसमय एव प्रतीयमानामित्यर्थः । **अवसान**

**इति** । ज्ञानप्राप्त्या संसारसमाप्तौ। **कदलीस्तंभवदिति** । यथाम्रनिम्बादिवृक्षे कर्तिते सारभागो दृश्यते रक्तादिवर्णयुतस्तथा कदलीस्तम्भे सारभागो न दृश्यते । **अनेकशतेति** । अनेकशतसंख्याका ये पाखण्डाः श्रुतिश्रद्धाविधुराश्चार्वाकादयस्तद्बुद्धिविकल्पनामास्पदं स्थानभूतः । यथा लौकिकवृक्षे स्थाणुर्वा पुरुषो वेति विकल्पा एवं संसारवृक्षेपि वेदबहिर्भूतानां ' अयं संघातो वा परिणामो वारब्धो वा नवेत्यादयोऽनेकसंशयाः समुत्पद्यन्त इत्यर्थः । **अनिर्धारितेदंतत्व इति** । तत्त्वजिज्ञासुभिरधिकारिभिस्तत्त्वदृष्ट्या विचार्यमाणेऽस्य संसारस्येदं तत्वमिदं स्वरूपमिति ब्रह्मणः पृथक्तया न ज्ञायते ब्रह्मातिरिक्तस्य सर्वस्य विवर्तभूतत्वात् । **वेदान्तेत्यादि** । वेदान्तेषूपनिषत्सु निश्चितं यत्परब्रह्मरूपं मूलं तदेव सारभागः स्थिरांशो यत्रेति । ब्रह्मातिरिक्तं संसारे सर्वमसारमित्यर्थः । **अविद्याकामेति** । अविद्याध्यासः कामकर्माण्यव्यक्तमज्ञातचैतन्यमेतानि बीजं तस्मात्प्रभव उत्पत्तिर्यस्य। **अपरब्रह्मेति** । अपरब्रह्मणोऽव्यक्तचैतन्यस्य विज्ञानक्रियाशक्तिद्वयात्मको हिरण्यगर्भः प्रथमावस्थाभेदोऽङ्कुरोऽस्येति। **सर्वप्राणीति**। सर्वप्राणिनां लिंगशरीरविशेषास्त एव स्कंधाः शाखाभूलानि यस्य । **तृष्णासलिलेति** । तृष्णा विषयतृष्णैव सलिलं तेन सेकः सेचनं तेनोद्भूतो दर्पो गर्व उच्छ्रायो यस्य । तत्तत्तृष्णेति पाठे विविधविषयजन्यतृष्णेति भावः । [ पृ. ७९ ] **बुद्धीन्द्रियेति** । बुद्धीन्द्रियाणां ज्ञानेन्द्रियाणां ये विषयाः शब्दस्पर्शादयस्ते प्रवालाः नवपत्राणि किसलयान्यङ्कुरा निशिताग्रभागाः प्ररोहाश्च यस्येति केभ्यश्चिद्वृक्षेभ्यः किसलयोद्भवः केभ्यश्चित्प्ररोहोद्भवः । अतो भाष्यकृद्भिः प्रवालाङ्कुरेति पदद्वयमुपात्तम् । पूर्वटीकाकृतां प्रवालाङ्कुरा इत्यस्य समुच्चयेन किसलयरूपार्थस्तु न विद्वन्मनोरमः पुनरुक्तिदोषसंभवात् । **श्रुतीति** । ' श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ' इति निरुक्त्या श्रुतिस्मृतिपदाभ्यां वेदो मन्वादिस्मृतयश्च गृह्यन्ते । न्यायविद्या—गौतमोक्तन्यायशास्त्रं षोडशपदार्थात्मकम् । तदुपदेश एव पलाशानि पत्राणि यस्येति । **यज्ञेति** । यज्ञादिक्रियारूपसुपुष्पयुतः । सुखेति वेदना—ज्ञानं, सुखदुःखज्ञानरूपा अनेके रसा यत्र । लौकिकवृक्षेतु यथासंभवं मधुरकट्वादिरेक एव रसः । **प्राण्युपजीव्येति** । प्राणिभिरुपजीव्यान्यनन्तानि पुत्रपश्वादिरूपाणि फलानि यस्येति । **तत्तृष्णेति** । तत्तत्फलतृष्णैव सलिलावसेकस्तेन प्ररूढानि कर्मवासनादीनि जटीकृतानि—सात्त्विकादिभावेन मिश्रीकृतानि

दृढबद्धान्यवान्तरमूलानि यस्य। जडीकृतेति पाठस्तु स्थिरीकृतानीति लाक्षणिकार्थेन कथमपि साधुः । **सत्यनामेति**। भूर्लोक, भुवर्लोक, स्वर्लोक, महर्लोक, जनोलोक, तपोलोक, सत्यलोक इति सप्त लोकाः । सत्यलोकस्यैव ब्रह्मलोकेति नाम । ब्रह्मादीनि भूतानि तान्येव पक्षिणस्तैः कृतं नीडमास्पदं यस्मिन्सः । सत्यादिसर्वलोकानां ब्रह्मादिभूतानां चाश्रयभूतः । **प्राणिसुखेत्यादि**। प्राणिनां सुखदुःखाभ्यामुत्पन्नौ हर्षशोकौ तज्जं नृत्यादि । क्ष्वेलितं—क्रीडाविशेषः। आस्फोटितं—भुजाबन्धः । हर्षितमामोदस्तज्जन्यं परहस्ताद्याकर्षणमाकृष्टं, हाहेत्यादयो रुदितशब्दाः । लौकिकवृक्षे तु पक्ष्यादीनां शब्दाः । **वेदान्तेति** । ब्रह्मात्मेति दर्शनं—जीवब्रह्मैक्यदर्शनम् । असंगः—संन्यासस्तावेव शस्त्रं तेन कृत उच्छेदो यस्य। अस्य संसारस्य छेदे जीवब्रह्मैक्यज्ञानं संन्यासश्चेत्येव साधनमित्यर्थः । **अश्वत्थ इति** । न श्वस्तिष्ठतीत्यश्वत्थः । चांचल्यं द्योतयितुमश्वत्थेति पदम् । **अश्वत्थवदिति**। सदा चलितत्वेऽयं दृष्टान्तः । अयं ह्यश्वत्थवृक्षस्य स्वभावो यत्स प्रकृतिस्थवातेनापि कम्पते। अन्यजातीया वृक्षास्तु अधिकवातेन कम्पन्ते। अतएवाश्वत्थः सदा कम्पमानोऽनुभूयते जनैः तद्वत्संसारवृक्षोऽपि सदा चलः। कामकर्माण्येव वातस्तेनेरितो नित्यप्रचलितः स्वभावो यस्येति । **स्वर्गनरकेति** । तिर्यग्गमनशीलत्वात्तिर्यञ्चः पशुपक्षिणः । प्रेतत्वं—अग्निसंस्काररहितानां जन्तूनामवस्थाविशेषः। आदिशब्देन स्वेदजानां कृमिदंशादीनां ग्रहणम्। **परमार्थदर्शनेति** । परमार्थदर्शनस्याद्वैतज्ञानस्याभाव एवावगमनं ज्ञानं येषामिति । परमार्थज्ञानेतु केवलं ब्रह्मैवावशिष्यत इति भावः । **मृदादिमिवेति** । यथा घटादिकार्यं मृदाद्युपादानकारणं नातिवर्तते तद्वत् । श्रीशङ्कराचार्यो रूपके महाकवीनप्यतिशेरते । एतत्समानं रूपकं भगवद्गीतासु पञ्चदशाध्याये 'ऊर्ध्वमूलमधःशाखम्' इत्यादिश्लोकेषु दृश्यते। श्रीमदाचार्यैस्तत्र तत्र रूपकमुच्यत उदाहरणार्थमैतरेयोपनिषत्स्थं रूपकं प्रदर्श्यते । तथाहि—ता एता अग्न्यादयो देवता लोकपालत्वेन संकल्प्य सृष्टा ईश्वरेणास्मिन्संसारार्णवे संसारसमुद्रे महत्यविद्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहेऽनादावनन्तेऽपारे निरालम्बे विषयेन्द्रियजनितसुखलवलक्षणविश्रामे पञ्चेन्द्रियार्थतृण्मारुतविक्षोभोत्थितानर्थशतमहोर्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोद्भूतमहारवे सत्यार्जवदानदया-

हिंसाशमदमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्यागमार्गे मोक्षतीर एतस्मिन्महार्णवे प्रापतन्पतितवत्यः । इति ॥ १ ॥

२ । ३ । २

[ शांकरभाष्यम् ] ननु संसारकार्यस्य शून्यतापर्यन्तः नाशादसत्पूर्वकमेव जन्म तेन च मूलरहितोऽयं स्यादिति शङ्कते—**यद्विज्ञानादिति** । **तन्नेति** । मृगजलादेरसद्वस्तुनः समुत्पत्त्यदर्शनात्कार्यस्य सत्पूर्वकत्वप्रसिद्धेश्चास्ति संसाररूपकार्यस्य सदात्मकं वस्तु मूलं तच्च प्राणपदलक्ष्यमित्युक्तार्थः । प्राणपदवाच्यं तु तन्न भवति प्राणवृत्तेरपि हेतुत्वात् । **स्वात्मेत्यादि** । आत्मपदेनान्तःकरणम् । स्वसंबन्ध्यन्तःकरणप्रवृत्तीनां साक्षिभूतमित्यर्थः ॥ २ ॥

[ प्रकाशिका ] [पृ.६०] **सप्तम्यन्तपदसामर्थ्यादिति** । स्थितानामिति पदाध्याहारं विना प्राण इति सप्तम्या अनुपपत्तिरित्यर्थः । शांकरभाष्येतु प्राणे सति प्राणलक्ष्ये ब्रह्मणि विद्यमाने सतीत्यर्थः कृतः । स एव विवर्तवादिमते साधुः । रामानुजीयमते वस्तूनां स्थितत्वं जगतः सत्यत्वात्संगच्छते । विवर्तवादिमते तेषामसत्यत्वात्तथाध्याहारकारणमसंगतं स्यात् । केचित्त्वित्यनेन शांकरभाष्यधृतोऽर्थः प्रदर्श्यते ॥ २ ॥

२ । ३ । ४

[ प्रकाशिका ] [ पृ. ८१ ] **विकरणव्यत्ययश्छान्दस इति** । इह शरीरपतनात्प्राग्बोद्धुं शक्नुयाच्चेद्विमुक्तो भवेदिति संबन्धः । एवं च शक्नुयादित्यस्य स्थानेऽशकदिति प्रयोगः । तत्र लकारव्यत्ययश्छान्दस इत्यपेक्ष्यते । लिङः स्थाने लुङ्लकारश्छान्दसः । ‘ हेतुहेतुमतोर्लिङ् ’ पा. सू. ३ । ३ । १५६ इति सूत्रेण **कृष्णं नमेच्चेत्सुखं यायादितिवत्** लिङो विधानात् । शक्नुवानित्यपपाठः । **जन्मजरेत्यादि** । जन्मजरादियुक्तत्वमेव विशीर्यमाणत्वमित्यर्थः ॥ ४ ॥

२ । ३ । ५

[ प्रकाशिका ] **चन्द्रिकाया इति** । आदर्शमालिन्ये प्रकाशाभावादित्यर्थः । प्रकाशविशिष्ट एवादर्शो गृह्येत तेन स्पष्टावयवप्रतिपत्तिः स्यादिति मत्वार्थान्तरमाह—**यद्वेति** । पूर्वाभिमुखस्य द्रष्टुर्मुखप्रतिबिम्बमादर्शे पश्चिमाभिमुखं भवति । एवं चादर्शस्थं प्रतिबिम्बं कल्पितार्थघटितं भवति न तदनवरुद्धमघटितमित्यर्थः । **सुलभमितीति** । मुञ्जादिषीकोद्धरणमिवाना-

त्मन आत्मनो विवेचनस्य दुष्करत्वाद्ब्रह्मलोकस्थानामप्यात्मतत्वं न सुलभमिति भावः ॥ ५ ॥

२ । ३ । ६

[ शांकरभाष्यम् ] [ पृ. ८२ ] **स्वस्वविषयेति** । शब्दादिविषयाणां ग्रहणमेव प्रयोजनं तेन सहेत्यर्थः । **पृथगुत्पद्यमानानामिति** । अत्रान्वयक्रमेण व्याख्यानमन्यत्र सर्वत्र शांकरभाष्यग्रन्थेषु पाठक्रमेणैव व्याख्यानं भवति । **शोककारणत्वानुपपत्तेरिति** । आत्मव्यभिचारो नाम द्वैतदर्शनं तदेव शोककारणं ' द्वितीयाद्वै भयं भवति ' इति श्रुतेरिति भावः ॥ ६ ॥

२ । ३ । ८

[ शांकरभाष्यम् ] **अलिंग एवेति** । वैशिषिकैर्बुध्यादयश्चतुर्दशात्मनो गुणा इत्यंगीक्रियते । तदर्थं च तैरेवमनुमानं प्रदर्श्यते । बुध्यादयः साश्रया गुणत्वाद्रूपवदिति । परमेतदनुमानमसत् । गुणानां साश्रयत्वस्यान्यथासिद्धत्वेन सिद्धसाधनत्वात् । किंच बुध्याद्याश्रयभूत आत्मेति यत्तैः कल्प्यते तच्छ्रुतिविरुद्धं श्रुतौ ह्यात्मनो निर्गुणत्वमुच्यते । ' ह्रीर्धीर्भीः सर्वं मन एव ' इति श्रुत्या मनसो बुध्यादिगुणवत्त्वमुच्यते च । ह्रीर्धीर्भीरित्यादिश्रुतौ वृत्तिवृत्तिमतोरभेदान्मन एवेत्यनेन मनसो वृत्तय इति बोध्यते। मुच्यतेऽमृतत्वं च गच्छतीति वाक्ययोः पुनरुक्तिर्न किन्तु मुच्यत इत्यनेन जीवत्यपि शरीरे मुक्तिर्बोध्यते । इयमेव जीवन्मुक्तिः । अमृतत्वं च गच्छतीत्यनेन विदेहमुक्तिश्च बोध्यते तदेतदाह—**यं ज्ञात्वेत्यादिना** । एवमर्थाकरणेऽमृतत्वं चेति चकारस्य वैयर्थ्यं स्यादित्यपि बोध्यम् ॥ ८ ॥

२ । ३ । ९

[ शांकरभाष्यम् ] [ पृ. ८३ ] कथं दर्शनमुपपद्यत इति प्रष्टुः कोऽभिप्रायः किं विषयतया दर्शनमुताविषयतयैव दर्शनोपायो वाच्यः । तत्र प्रथमपक्ष आह—न संदृश इति । रूपादियुक्तं रूपादिविशेषणं च वस्तु दर्शनयोग्यं भवत्यत्र तु तदभावान्न दर्शनविषयतेत्यर्थः । द्वितीयपक्ष आह—कथं तर्हीति । बाह्येन्द्रियोपरमेऽपि यदा मनो विषयान् संकल्पयते तदा मुमुक्षोर्बुद्धिस्तस्य मनसो नियामिका भवति । पृच्छति च तत् । हे मनः किमर्थं त्वं पिशाचवत्प्रधावासि । न तावत्स्वप्रयोजननिमित्तम् । तव जडत्वेन प्रयोजनसंबन्धासंभवात् । विषयप्रयोजननिमित्तमिति चेत्तदपि न संभवति तेषां क्षयिष्णुत्वादिदोषवत्त्वेन संबन्धेन प्रयोजनानुपपत्तेः । चेतनप्रयोजन-

निमित्तमिति चेत्तदपि न। तस्यासंगत्वेन परमानन्दस्वभाववत्वादिति नियन्तृत्वेन बुद्धिर्मनीडित्युच्यते। अविकल्पयित्र्येति सर्वविकल्पशून्यया केवलं ब्रह्मास्मीत्याविषयतयैव ब्रह्मभावव्यंजिकया महावाक्योत्थबुद्धिवृत्या ज्ञातुं शक्यत इति संबन्धः। **अभिप्रकाशित इति**। मया दृश्यमनं घटादि यथाहं न भवामि तथा शरीरेन्द्रियसंघाते यद्यद्दृश्यं तत्तदहं न भवामि किंतु योऽत्र ज्ञोऽशः सोऽस्मि सर्वशरीरेष्वेकलक्षणलक्षितत्वादेक एवेति विचारेण प्रथमं संभावित इत्यर्थः ॥ ९ ॥

२।३।१०

[शांकरभाष्यम्] बहुशः श्रुतवेदान्ता अपि केचिद् ब्रह्मास्मीति स्थिरबुद्धिमन्तो न भवन्तीति किंचित्प्रतिबन्धकान्तरं भवेत्तदपाकरणार्थमुपायो वक्तव्य इत्याह-**सा हृदिति। योग इति**। श्रवणमननाभ्याससंभावनादोषस्य निरासेऽपि चित्तानेकाग्रतादोषरूपः प्रतिबन्धकः संभवति तदर्थं योगश्चित्तवृत्तिनिरोधरूपः कथ्यते। [ पृ. ८४ ] अवतिष्ठन्ते—निवृत्तव्यापाराणि भवन्ति ॥ १० ॥

[ प्रकाशिका ] [ पृ. ८३ ] **व्युत्पत्त्येति**। ज्ञायते घटादिरनेनेति करणव्युत्पत्त्या ज्ञानशब्दस्येन्द्रियवाचकत्वं तदाह—**इन्द्रियाणीति। व्यपदिश्यत इति**। अध्यवसायादिवृत्तिभेदान्मन एव बुद्ध्यादिशब्दभाक्। अध्यवसायात्मिका बुद्धिः। अभिमानात्मकोऽहंकारः। चिन्तात्मकं चित्तम्। संकल्पविकल्पात्मकं मनः ॥ १० ॥

२।३।११

[ शांकरभाष्यम् ] तां योगमिति मूले योगशब्दस्याजहल्लिङ्गत्वात्पुंलिंगेनापि सामानाधिकरण्यम्। इतिशब्देन कर्मणोऽभिधानात्तां योग इति मन्यन्त इति प्रथमान्तपाठ आवश्यकश्छान्दसत्वाद्द्वितीयान्तः कथमपि साधुः। वस्तुतो वियोगमपि विरुद्धलक्षणया तं योगं मन्यन्त इत्युक्त तद्विशदयति—**सर्वानर्थेति**। सर्वानर्थसंयोगेत्यत्राधुना संयोगेति पाठो दृश्यते सच पूर्वव्याख्याभ्यां नाद्रियते। अतोऽसाधुः। अनर्थसंयोगपूर्वको वियोग इति मध्यमपदलोपिसमासेनानर्थसंयोगेभ्यो वियोग इति पंचमीसमासेन वा कथमपि स्थितस्य गतिश्चिन्तनीया। **एतस्यामवस्थायामिति**। लयविक्षेपकषायरसास्वादवर्जितायामवस्थायामित्यर्थः। एते लयादयश्चत्वारो निर्विकल्पकसमाधेर्विघ्नभूताः। तल्लक्षणानि। लयो नाम—अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा। विक्षेपो नाम—अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यालम्ब-

नम् । कषायो नाम—लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावादखण्डवस्त्वनवलम्बनम् । रसास्वादो नाम—अखण्डवस्त्वनवलम्बनेऽपि चित्तवृत्तेः सविकल्पानन्दास्वादनम् । समाध्यारंभसमये सविकल्पानन्दास्वादनं वा । अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पः समाधिरित्युच्यते । तदुक्तं गौडपादाचार्यैः—"लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः । सकषायं विजानीयाच्छमप्राप्तं न चालयेत् ॥ नास्वादयेद्रसं तत्र निःसंगः प्रज्ञया भवेत्" । मां. का. ३।४४—४५ "यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता" भ. गी. ६।१९ इति च । **संभवोऽस्तीति** । प्रमादो हि बुद्ध्यादिजन्यः । योगारंभकाले प्रमादवर्जनं विधेयतया व्याख्यायानुवादपरतया व्याख्याति—**अथवेति** ॥ ११ ॥

[ प्रकाशिका ] [ पृ. ८४ ] **बाह्याभ्यन्तरेति** । चक्षुरादीनि बाह्यकरणानि मनोऽन्तरिन्द्रियं तेषां धारणा नाम स्वस्वविषयेभ्य आकर्षणम् । अवहिताचित्तता—समाधिः । **प्रतिक्षणापायेति** । चित्तवृत्तिनिरोधात्मको योगः । चित्तस्य चंचलस्वभावत्वाद्योगस्य प्रतिक्षणं विनाशसंभावना । तेन तत्र सावधानता द्योत्यते । अथवा योग एवेष्टोत्पत्तिरूपस्यानिष्टनाशरूपस्य च पुरुषार्थस्य मुख्यं साधनमतस्तत्र सावधानता द्योत्यते ॥ ११ ॥

२।३।१२

[ शांकरभाष्यम् ] [ पृ. ८५ ] कार्यप्रविलापनस्य-कार्यलयस्य । **अस्तित्वनिष्ठत्वादिति** । घटोऽस्तीत्यस्तित्वेन प्रतिपन्नस्य घटस्य मुद्गरादिना नाशे घटाकारस्यैव विनाशो न त्वस्तित्वांशस्य । यतस्तस्यास्तित्वांशस्य कपालोऽस्तीत्यादिना प्रतीतिः । एवंच कार्यप्रविलापनस्य कारणास्तित्वांशनिष्ठत्वान्न शून्यतापर्यवसायी लय इति स्पष्टयति—**तथाहीति** । **सूक्ष्मतारतम्येत्यादि** । स्थूलस्य घटकार्यस्य लये ततः सूक्ष्मं कपालरूपं कारणमवशिष्यते । तस्यापि लये सूक्ष्मतरं कपालिकापरमाणुपर्यन्तमवशिष्यते । एवं सूक्ष्मतापारम्पर्येण सर्वमूर्तानां लयेऽमूर्तमस्तित्वबुद्धिरूपमवशिष्यते यावद्दर्शनम् । ननु यद् दृश्यं तदसद्यथा स्वप्नदर्शनमित्यनुमानाङ्गीकारे सद्बुद्धिरपि नास्तीत्याशङ्क्याह—**यदापीति** । सद्बुद्धिर्नास्तीति प्रत्ययोऽपि सद्बुद्धिरस्तीत्येव बोधयति । अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणात्वान्निषेधेनास्तित्वबुद्धेरेव द्योतनात् । **बुद्धिरिति**। घटोऽस्ति पटोऽस्तीत्यत्र

विषयाणां घटादीनां व्यभिचारेऽपि सद्बुद्धेरव्यभिचारदर्शनाद्बुद्धेश्च स्वतः प्रामाण्यात्सन्मात्रं वस्त्वभ्युपगन्तव्यम् ॥ १२ ॥

[ प्रकाशिका ] [ पृ. ८९ ] **न्यूनसंख्यावादा इति** । श्रुतिस्मृतिप्रामाण्यात्पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेत्येकादशैवेन्द्रियाणि । यत्र वाक्येऽतो न्यूनेन्द्रियसंख्या तत्रैतान्येवैकादशसु विशेषोपकारकारिणीत्यर्थो ज्ञेयः । यत्रैकादशभ्योऽधिकानीन्द्रियाणि प्रोच्यन्ते तत्र मनोवृत्तिभेदेनाधिकसंख्या लापनीया । अयमर्थः । अन्यान्यधिकानीन्द्रियाणि मनोवृत्तिभेदजन्यत्वान्मनस एव भेदरूपाणि तेन मनसि तेषामन्तर्भावः । **उपनिषदेकगम्यत्वादिति** । 'औपनिषदं पुरुषं पृच्छामि' इति श्रुतेः । उपनिषदि दृष्ट औपनिषदः ॥ १२ ॥

२।३।१३

[ शांकरभाष्यम् ] सोपाधिकस्यात्मनो ज्ञानान्मुक्तिर्न संभवतीत्यतो निरुपाधिकज्ञानाय प्रयतितव्यमित्याह—**यदा त्विति** । बुद्ध्याद्युपाधिक आत्मनि प्रथमं स्थिरीभूतस्य चेतसस्तद्द्वारेण लक्ष्यपदार्थावगमे सति क्रमेण वाक्यार्थज्ञानं संभवतीत्याह—**तत्रापीति** । [ पृ. ८६ ] **सत्कार्योपाधिकृतास्तित्वप्रत्ययेनेति** । सदुपलभ्यमानं कार्यमुपाधिर्यस्य कारणत्वस्य तत्कृतो योऽस्तित्वप्रत्ययः कारणत्वादस्ति पर आत्मेति तेनोपलब्धस्य ॥ १३॥

[ प्रकाशिका ] [ पृ. ८६ ] **भुक्ता ब्राह्मणा इतिवदिति** । भुक्तमस्ति येषामिति मत्वर्थीयोऽच् । अर्शआदित्वादच्प्रत्ययः । तद्वदुपलब्धस्येत्यत्रोपलब्धमस्त्यस्येत्युपलब्धवत इत्यर्थः । विवृतं चैतत्सिद्धान्तकौमुद्याम् । यथासंख्यं संबन्धः । **विश्लिष्टाश्लिष्टेत्यादि** । पूर्वदुरितं संचितरूपं विश्लिष्टं, उत्तरदुरितं क्रियमाणरूपमश्लिष्टं यस्य । संचितक्रियमाणदुरितरहित इत्यर्थः । **अनुपोष्येति** । 'उष दाहे' इत्यस्योपोपसर्गपूर्वकस्य रूपं तदाह—**अदग्ध्वैवेति** । **इत्यभिप्राय इति** । अस्मिन्मते जीवन्मुक्तेरस्वीकारादेवमभिप्रायकथनम् । श्रीभाष्ये समन्वयाधिकरणे जीवन्मुक्तिः खण्ड्यते । का चेयं जीवन्मुक्तिरित्यादिना ॥ १३ ॥

२।३।१९

[शांकरभाष्यम्] [पृ.८७] **उपदेश इति** । उपदिश्यत इति व्युत्पत्त्या प्रत्यगभिन्नः परमात्मोपदेशः ॥ १९ ॥

[ प्रकाशिका ] **उपसंहरतीति** । श्रुतिरिति शेषः [ पृ. ८७ ] **साध-**

**कक्रुत्यमिति** । मूर्धन्यनाडीनिष्क्रमणार्चिरादिगमनं साधकेन स्वयं कर्तुमशक्यं भगवानुपासनेन प्रीतः संस्तस्मिंस्तादृशं सामर्थ्यमुत्पादयेत् ॥ १९ ॥

२ । ३ । १६

[ शांकरभाष्यम् ] शतं चैकेति मंत्रः प्रकरणविच्छेदेनोक्तो यतो ब्रह्मवित्प्रकरणं प्रचलति । तत्र गतेः संभवो नास्ति । अत्र च शतं चैकेत्यादिना गतिरुच्यते । अतोऽत्र प्रकरणभेदः कर्तव्यः । अतः प्राग्ब्रह्मप्रकरणमस्मान्मंत्रादारभ्य मन्दब्रह्मवित्प्रकरणम् । अत्र भास्कराचार्यः प्रकरणाद्ब्रह्मविद्विषयैवेयं गतिरित्यंगीकरोति ताच्चिन्त्यम् । गतिश्रवणाल्लिंगान्मुख्यब्रह्मविदो गतेश्च श्रुतौ निषेधात् । लिंगापेक्षया प्रकरणस्य दौर्बल्यं 'श्रुतिलिंगप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्' जै. सू. ३ । ३ । ८ । १४ इति सूत्रेण सिद्धं मनसिकृत्याह—**ये पुनर्मन्दब्रह्मविद इति** ॥ १६ ॥

[ प्रकाशिका ] [ पृ. ८८ ] **देशविशेषविशिष्टेत्यादि** । मूर्धन्यनाडीगत्या प्राप्यमाणो यो विशिष्टो वैकुण्ठादिदेशस्तत्स्थब्रह्मदर्शनपूर्वकं स्वस्वरूपाविर्भाव एवेयं मुक्तिः । सुषुम्नाभिन्ननाडीभिरुत्क्रमणे नानाविधा मनुष्यपश्वादिरूपयोनिप्राप्तिरूपा गतिस्तदाह—**अन्यास्त्वित्यादिना** ।**दुर्विवेचतयेति**। इयमेव सुषुम्ना नान्येति मरणकाले पृथक्कर्तुमशक्यतयेत्यर्थः । **याद्दच्छिकीमिति** । घुणाक्षरकाकतालीयवत्केनाचित्सुषुम्ना गतिः प्राप्येत तदभिप्रायेणायमनुवाद इत्यर्थः। **विद्वदविद्वत्त्वसाधारणमिति** । द्वन्द्वान्ते श्रूयमाणत्वात्त्वप्रत्ययस्य ' तस्य भावस्त्वतलौ ' पा सू. ५ । १ । ११९ इति विहितस्य भाववाचकस्योभयत्र संबन्धः । तेन विद्वत्त्वाविद्वत्त्वसाधारणमिति लब्धम् । ततश्चायमर्थः । हृदयाग्रप्रद्योतनमारभ्य मूर्धादिशरीरावयवनिष्क्रमणपर्यंतं विदुषोऽविदुषश्च गमनं समानम् । ततो विदुषो यद्वैलक्षण्यं तदाह—**विद्वांस्त्विति** । **परमपुरुषेत्यादि** । भगवदाराधनरूपा यात्यन्तं प्रियोपासना तद्बलेन विद्वान् विद्याङ्गत्वेनात्यन्तप्रियगतिं स्मरति ततः परमपुरुषस्य भगवतोऽनुग्रहः । ततोऽन्यैर्दुर्विवेचनीयापि सुषुम्नाख्यनाडी तेनोपासकेन लभ्यते ततश्च तस्योक्ता गतिः ॥ १६ ॥

२।३।१७

[ शांकरभाष्यम् ] [पृ. ८८] **मुञ्जादिवेति** । मुञ्जाख्यतृणमध्यस्थेषीका तत्तृणगतयष्टिस्तत्पत्रेणातीवाविविक्ता भवति: तत्पृथक्करणमतीवैकाग्रतया साध्यं तथैव शरीरादात्मनः पृथक्करणम् ॥ १७ ॥

[ प्रकाशिका ] [ पृ. ८९ ] **समभिव्याहृतेति** । समभिव्याहृतः—समीपोच्चारितः । अयमर्थः । देवदत्तः स्वाच्छरीराद्विलक्षण इति वाक्ये स्वपदेन समीपोच्चारितस्य देवदत्तस्य संबन्धि यच्छरीरं तद्ग्रहणं तद्वत् तं स्वाच्छरीरादिति मंत्रे स्वशब्देनान्तरात्मसंबन्धि जनवाचकं चेतनं शरीरं गृह्यते । **धारकत्वेत्यादि** । अन्तरात्मा जनशब्दितस्य चेतनस्य धारको नियन्ता । तच्च जनशब्दितमस्य शेषभूतमयं चान्तरात्मा तच्छेषीति वैलक्षण्यं ज्ञेयमित्यर्थः ॥ १७ ॥

२।३।१८

[ शांकरभाष्यम् ] [ पृ. ८९ ] **अध्यात्ममेवेति** । आत्मनि देह इत्यध्यात्मम् । 'अव्ययं विभक्ति' पा. सू. २।१।६ इत्यादिसूत्रेण विभक्त्यर्थेऽव्ययीभावः । प्रत्यक्स्वरूपं ब्रह्म प्राप्येत्यर्थः । अर्चिरादिमार्गगम्यं रूपं प्राप्य तु न विमृत्युता संयोगस्य वियोगावासनत्वात् ॥ १८ ॥

२ । ३ । १९

[ शांकरभाष्यम् ] **प्रमादकृतान्यायेनेति** । यथायथमध्ययनाकरणमालस्यादिति शिष्यापराधः । तथैवान्यायाध्यापनं गुरोरपराधः । [ पृ. ९१ ] तेजस्विनावित्यस्य तेजस्विनोरिति षष्ट्यन्तेन विपरिणामः स्वधीतमित्यस्याध्याहारश्चेत्युभयं क्लिष्टमतो व्याख्यानान्तरमाह—**अथवेति** [ पृ. ९२ ] **द्वेषमिति** । अनेन सम्यङ् नाधीतमनेन च सम्यङ् नाध्यापितमिति मत्वा द्वेषः । [ पृ. ९३ ] **सर्वदोषोपशमनार्थमिति** । आध्यात्मिकाधिभौतिकाधिदैविकदोषत्रयप्रशमनार्थं त्रिर्वचनम् । ओँकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ १ ॥ 'इत्युक्त्या ओँशब्दो मङ्गलार्थक इतिशब्दो भाष्यसमाप्तिद्योतकः ॥ १९ ॥

[ प्रकाशिका ] **सहैव परिपालयत्विति** । सहेति त्रिवारमस्मिन्मंत्र उपलभ्यते । तत्र प्रकाशिकायां 'स, ह' इति पदद्वयमेकत्र स्थलेऽङ्गीकृतमन्यत्र स्थलद्वये सहेत्येकं पदं तन्न संगच्छतेऽर्धजरतीयदोषापत्तेः । शांकरभाष्ये तु सर्वत्रैवैकमेव पदमादृतम् । **सनियमेति** । असूयकायानृजवे विद्या देयेति नियमः 'विद्या ह वै ब्राह्मणमाजगाम' इत्यादिश्रुत्या प्रदर्शितः । [ पृ. ९० ] विब्रूते—पाठयति । **पृच्छतीति** । नापृष्टं कस्यचिद्ब्रूयान्न चान्यायेन पृच्छत इतिस्मृतेः । **दोषशान्त्यर्थमिति** । आध्यात्मिकादित्रिविधदोषप्रशमनार्थं त्रिवारं शान्तिरिति पदम् । प्रतिसंबन्धी—

प्रतियोगी । भोक्तेत्यर्थः । **छत्रिन्यायेनेति** । छात्रिणो यान्तीत्यत्राछात्रिणोऽपि छत्रिपदेन गृह्यन्ते तद्वदपिबन्नपि परमात्मा पिबत्पदेन गृह्यते । **शक्यशङ्क इति** । प्रकरणविच्छेदविषये शंका कर्तुं न शक्यत इत्यर्थः। [ पृ. ९१ ] **उपासनाविधायिशास्त्रस्येति** । खरतुरगादीनां हृदयं यद्यप्यंगुष्ठप्रमाणाधिकं तथापि येऽत्रोपासनायामधिकारिणो यदर्थं चोपासना विहिता तेषां मनुष्याणां हृदयमङ्गुष्ठपरिमितं ततस्तदुपाधिद्वारा परमात्मनो ङ्गुष्ठमात्रत्वे न काप्यनुपपत्तिरित्यर्थः । हृदयावच्छेदनिबन्धनं—हृदयावच्छेदमूलकं यदंगुष्ठप्रमितत्वं तत्र [ पृ. ९२ ] **उपचारादिति** । आयुर्वै घृतमितिवल्लक्षणयेत्यर्थः । मुख्यार्थबाधे लक्षणाया अङ्गीकार्यत्वान्मुख्यार्थबाधमाह-**स्थूलशरीरस्यैवेत्यादिना**। **कापिलतन्त्रसिद्धोपादान इति** । कापिलतन्त्रे सांख्यशास्त्रे सिद्धमङ्गीकृतं यदव्यक्तं तद्ग्रहणं कुतो न क्रियत इत्यर्थः । **तदनभ्युपगमादिति** । परमात्माधीनतया तदनधिष्ठितत्वेन प्रयोजनवत्त्वस्यानंगीकारात् । कापिलतंत्रोक्ताव्यक्ताग्रहणे हेत्वन्तरमाह—**ज्ञेयत्वावचनाच्चेति** । [ पृ. ९३ ] **उपायोपेयोपेतॄणामिति** । उपायः साधनम् । उपेयः साध्यः । उपेता—साधकः । इति **स्थितमिति** । अयं सिद्धान्त इत्यर्थः ॥ १९ ॥

इति **पाठकोपाव्हश्रीधरशास्त्रिकृता** कठोपनिषच्छांकरभाष्यप्रकाशिका व्याख्या **बालबोधिनी** समाप्ता ॥

**इति काठकोपनिषद्व्याख्याद्वयबालबोधिनी समाप्ता ।**

श्रीः

# भाष्यद्वयवाक्योदाहृतानां संक्षिप्तचिह्ना स्पष्टीकरणम्.



ऐ—ऐतरेयोपनिषद्.

क. का.—कठोपनिषद्.

का. वा.—कात्यायनवार्तिकम्.

के.—केनोपनिषद्.

भ. गी. गी.—भगवद्गीता.

छां.—छान्दोग्योपनिषद्.

जै. सू. जैमिनीयसूत्रम्.

तै.—तैत्तिरीयोपनिषद्.

नृ. ता.—नृसिंहतापनीयोपनिषद्

पा. सू.—पाणिनीयसूत्रम्

प्र.—प्रश्नोपनिषद्.

बृ.—बृहदारण्यकम्.

बृ. माध्य.—बृहदारण्यकमाध्यन्दिनशाखायाः

ब्र. सू. ब्रह्मसूत्रम्.

म. भा.—महाभारतम्.

मु.—मुण्डकोपनिषद्.

श्वे.—श्वेताश्वतरीयोपनिषद्.



## शांकरभाष्ये लब्धस्थलानि वचांसि ।



## शांकरभाष्येऽलब्धस्थलानि वचांसि.



## प्रकाशिकायां लब्धस्थलानि वचांसि ।

पृष्ठ.

परं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।
यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥

प्रकाशियामलब्धस्थलानि वचांसि । पृष्ठ.

## प्रकाशिकास्था ब्रह्मसूत्राणामधिकारणानां च निर्देशाः ।